# काव्योन्मेषः

(संस्कृतकाव्यसंग्रहः)




प्रणेता

प्रा. हरिश्चन्द्रो रेणापुरकरः

एम्.ए.

शासकीयमहाविद्यालयनिवृत्तप्राचार्यः

संस्कृतविभागाध्यक्षश्च

गुलबर्गा





भारतीयविद्याभवनम्

मुम्बापुरी - ७

प्रकाशक :

एस्. रामकृष्णन्
कार्यवाहकमन्त्री, भारतीयविद्याभवनम्
मुम्बापुरी - ७

प्रथमावृत्तिः १९८९



काव्योन्मेषः

प्रा. हरिश्चन्द्र रेणापुरकरः
मराठीसाहित्यमण्डलाध्यक्षः
पटेल चौक, गुलवर्गा ( कर्णाटक )



मुद्रक :

श्री. कुमुदचन्द्र फुलचन्द शाह
मे. सन्मति मुद्रणालय
१६६, शुक्रवार पेठ, सोलापुर - ४१३००२

मुखपृष्टम् :

ग्राफिक आर्टस्, सोलापुर




# काव्योन्मेषः

## समर्पणम्

निःस्वो विभवहीनोऽहं
त्वयि निक्षिप्तजीवितः ।
त्वदीयं वस्तु विश्वेश
तुभ्यमेव समर्पये ॥

— हरिश्चन्द्रः



# Publisher's Note

Bharatiya Vidya Bhavan has always been promoting the study of Sanskrit. It has published several Sanskrit works in the last fifty years of its eventful existence.

It believes that even in the modern age and in future, studies of Sanskrit lore are essential for the progress and happiness of the world. Modern Scientists all over the world have now started endorsing this View.

In this spirit we place before the lovers of Sanskrit this Kavyonmesh by Prof. Renapurkar of Gulbarga (Karnatak). His metres are chaste and subjects are national. This blend of ancient modes with modern thought makes his poems a treat for the connoisseur. Prof. Renapurkar's poems have been published in various periodicals all over India over a length of time. After his retirement he has collected them in this volutme.

We are happy to be the publisher of this volume.

Bharatiya Vidya Bhavan
Bombay – 7
14 - 1 - 1989



R. R. Diwakar
S. Ramakrishnan
General Editors
Bhavan's publications

# प्रकाशक उवाच

प्रा. हरिश्चन्द्ररेणापुरकरस्य नाम संस्कृतपाठकानां परिचितमेव। तेन स्वकीयाः रचना भारतीयनियतकालिकेषु यथाकालं स्फुटं प्रकाशिताः। निवृत्त्यनन्तरं ता ग्रन्थरुपेण प्रकाशयितुं प्रमुदिता वयम्।

भारतीयविद्याभवनं संस्कृतभाषावाङ्मये दृढं विश्वसिति। तस्य परिशीलनमद्यतनकालेऽप्युपयुक्ततरमिति मन्यामहे। न तत्र केवलं काव्यं तत्त्वज्ञानं धार्मिकं साहित्यमेवान्तर्भूतम्। अपि तु भौतिकजीवनोपयोगिशास्त्राण्यपि तत्र ग्रथितानि। शास्त्रज्ञैरपि संस्कृताभ्यासोऽधुनाऽङ्गीक्रियते। अत इदं ग्रन्थं प्रकाश्य वयं समाधानिनः।

अत्र यो भारतीयत्वाभिमानो दृश्यते स मोदावहः। प्राचीनवाङ्मये स्थानाभिमानो धार्मिकतीर्थेष्वेव दृश्यते। अधुना तु राष्ट्रियत्वोपकारकोऽयमभिमानो युवकान् स्फूर्तिप्रदो भवेत्। वृत्तरचनाऽपि निर्दोषाऽत्र।

वाचकेभ्यो ग्रन्थमुपहारीकृत्य वयं विरमामः।

आर्. आर्. दिवाकर
एस्. रामकृष्णन्
जनरल एडिटर्स भवन्स
पब्लिकेशन्स

भारतीयविद्याभवनम्
मुम्बापुरी - ७
१४ - १ - १९८९

### बृहत्संस्कृतधर्मकोशसम्पादकानां मराठीविश्वकोश-मण्डलाध्यक्षाणां पण्डितवर्याणां तर्कतीर्थ-श्रीलक्ष्मणशास्त्रिजोशीमहाभागानां

# प्रस्तावना

श्रीहरिश्चन्द्रसुधिया विरचितः अयं काव्योन्मेषः विविधान् विषयान् स्पृष्ट्वा चित्तचमत्कृतिमावहति, ब्रह्मविद्यया च परिबृंहितः परमात्मरहस्य-मवगाहते। ब्रह्मसाक्षात्कारः परमं प्रयोजनं मानवजन्मनः इत्येष निर्णयश्च दृढीकृतोऽनेनोन्मेषप्रपञ्चेन। अनेन कविना संस्कृतवाणी कस्मात् अङ्गी-कृता स्वाविष्काराय। अयं खलु यतः श्रद्दधाति यत् संस्कृतभाषा देववा-णीति। अस्यां भाषायां विरचितानि काव्यानि शास्त्राणि च अस्या दिव्यत्वं नूनं ख्यापयन्ति। तदेव दिव्यत्वमस्या अध्ययनाय प्रवर्तयति प्रेक्षाकारि-जनान्। अयं च कविः अभीक्ष्णं बोधयति यत् 'नूनं सुसेव्या सुरभारती सा'। अयं कविः संस्कृतभाषोपेक्षणेन क्षुब्धः आङ्ग्लभाषाकर्षणं भार-तीयानां दृष्ट्वा दूनमनाश्च आदिशति भारतीयान् – आङ्ग्लीधुरं क्षिपत सत्वरमात्मकण्ठात्। स खलु मनुते इदं आङ्ग्लभाषाश्रयणं मानसदास्य-पाशलक्षणमिति। अस्य महामनसः कवेरयमादेशः संस्कृतभाषायां निवेदितः के कति च भारतीयाः पठिष्यन्ति। अत्यन्तमल्पाङ्काः सन्ति संस्कृतभा-षाविदः। ये आङ्ग्लभाषया आकृष्टाः ते बहवः संस्कृतं नैव जानन्ति।

अयं काव्योन्मेषकारः राष्ट्रभक्तिभावितः भारतस्य स्वातन्त्र्योत्तर-कालिकपरिस्थितिं समालोच्य क्षुब्धान्तःकरणस्थितचिन्तामाविष्करोति। शरीरश्रमव्यवसायिनां कृषिकर्मोपजीविनां च बहुजनानां आर्थिकं स्वास्थ्यं निरन्तरायं यावन्न भवेत् तावत् स्वातन्त्र्यस्य साफल्यं भारतभूः न प्राप्नु-यात् इत्येवं ज्ञापयति अयं काव्योन्मेषप्रबन्धकर्ता। अस्मिन् देशे अकिञ्चना बहवः गभीरे दैन्यगर्ते अधोधः गच्छन्ति दैन्यनिरसने वैफल्यं अनुभवन्ति; नग्नप्राया जीर्णचीरा अर्धान्नभोक्तारः शैत्यवातातपार्ता जनाः तत्र तत्र दृष्टिपथं च यान्ति; तेन च मनांसि सज्जनानां अशान्तिग्रस्तानि भवन्ति।

स्वदेशस्य दुरवस्थाविवरणं सहृदयजनमनःक्षोभकरं कृतमनेन काव्यप्रबन्धेन। निर्णयवाणीं च वदति अयं कविः यावज्जनाः समस्ताः सुस्थाः सुविद्याः सुवृत्ता न भवन्ति तावत् स्वराज्यं लोकराज्यपदवीं नार्हतीति।

अयं कविर्विभूतिगुणगणनाप्रवीणः आधुनिकपरिव्राजकाचार्यौ दयानन्दविवेकानन्दौ महात्मानं गान्धीं वीरं जवाहरलालनेहरूं वेदविदां वरं श्रीपादाख्यं सातवलेकरं भारतराष्ट्रस्य भूषणं इन्दिरां लालबहादुरशास्त्रिणं च महामन्त्रिणं भूयस्या प्रशंसया वाचकवर्गस्य हृदयमन्दिरे मानससाक्षात्कारगोचरान् करोति। स्वामी दयानन्दः तारुण्ये मुनिजनकठोरं व्रतं वृत्वा ब्रह्मचर्येण संन्यासेन च प्रज्ञाप्रसादं लब्ध्वा निगूढं वेदार्थं प्रकटीकृतवान् इति योगवित्तमः अरविंदघोषः अवोचत्। यतिराट् विवेकानन्दः जीवन्मुक्तेन रामकृष्णेन परमहंसेन अनुगृहीतः परमार्थे प्रस्थापितः भारतीयधर्मरहस्यं विश्वधर्मपरिषदि अमेरिकादेशे प्रकटीचकार इति इतिहासज्ञा नितरां जानन्ति। अपूर्वेण निःशस्त्रेण यस्य युद्धविधानेन हृदयपरिवर्तननीत्या आधुनिकजगति प्रबलतमं साम्राज्यं पराभूतं अभवत् स पुण्यराशिर्महात्मा गान्धी सत्यस्य परम उपासकः विश्वशान्तिसाधनाय नूतनं राजनीतिपथं निर्मितवान् इति राजनीतिशास्त्रकोविदा वदन्ति। तस्य धन्यस्य चरित्रं प्रसन्नया साहित्यशैल्या पद्यनिबद्धं कृतं अनेन कविना। स महात्मा भारतीयस्वराज्यस्थापकः स्वसुखनिरभिलाषः राष्ट्रीयां एकात्मतामुद्दिश्य स्वप्राणान् अर्पितवान्। स्वराज्यान्दोलने तस्य प्रभावात् अपरिगणनीयाः स्वातन्त्र्यसैनिकाः स्वार्थं परित्यज्य दीर्घकालं कारावासं देहदण्डं देहान्तदण्डं च शौर्येण अङ्गीकरणाय प्रवृत्ताः इत्येषा भारतस्वातन्त्र्येतिहासकथा अविस्मरणीया मनसि अधिरोहति अस्य काव्यस्य चिन्तनात्।

मेधावी प्रौढधिषणोऽयं कविः धर्मतत्त्वसमीक्षणाय प्रवृत्तः विचारवैशारद्यं प्रकटीकरोतीति चित्रमेतत्। अत्र अन्तरंगगुणोत्कर्षसिद्धिदः धर्मः इति धर्मस्य तात्त्विको निष्कर्षः प्रदर्शितः। अयमेव सर्वेषां मानवानां साधारणो धर्मः यमनियमरूपैः संपन्नः प्रज्ञावद्भिः प्रतिपाद्यते। अस्मिन् काव्योन्मेषे प्रतिपादितः धर्मः अभ्युदयाय निःश्रेयसाय च भवेत्।

मकरसंक्रान्तिः
१४-१-१९८९
वाई

( तर्कतीर्थः ) लक्ष्मणशास्त्री जोशी

# शब्दद्वयम्

सुरगिराप्रणयाप्लुतचेतसो रसिकसत्तमसंस्कृतसूरयः ।
श्रुतिपथातिथितां मम नीयतां किमपि सादरनम्रनिवेदनम् ॥ १ ॥

रुचिरकाव्यसुमार्घ्यसमर्पणैरमरवागधिदैवतसेवया ।
किमपि जन्म कृति प्रतिपित्सुना व्यरचि काचन काव्यततिर्मया ॥ २ ॥

अमरवाग्वरपत्रपुटाङ्किताः कतिपयाः कविताः परिशील्य मे ।
रसिकवर्यवदान्यविमर्शकैरतितरां मुदिता प्रकटीकृता ॥ ३ ॥

मम सदोषकृतिष्वपि भाविता गुणलवा हि गुणज्ञमहात्मभिः ।
कटुकनिम्बरजःस्विव सारघं भृशमहो गुणवद्गुणगृह्यता ॥ ४ ॥

सहृदयैर्ममकाव्यसमीक्षकै रसिकमित्रवरैश्च मुहुर्मुहुः ।
कतिपयोत्तमकाव्यसमुच्चयप्रकटनार्थमभूद्विनिवेदितम् ॥ ५ ॥

बहुधनव्ययसाध्यमभूदिति वसुविहीनतया चिरमौनिता ।
अशरणेन मया शरणीकृता धनमहो बलवत्तमसाधनम् ॥ ६ ॥

तदनु भाग्यवशात्कृपया प्रभोर्निजमहाशयशासनसाह्यतः ।
मम चिरात्समभूत्सफलं ध्रुवं कवनसंग्रहमुद्रणकाङ्क्षितम् ॥ ७ ॥

रसिकवर्यकराम्बुजयोरिमां लघुतमामुपदामुपढौकयन् ।
अनुभवामि परां कृतकृत्यतां रसिकसूक्ष्ममतिर्निकषोपलः ॥ ८ ॥

नहि भवामि कविर्नच लेखकः सुकविपादकुशेशयषट्पदः ।
मधुसुगन्धविलोभितचेतसा कलरवं वितनोमि कदा कदा ॥ ९ ॥

तदपि देवगिरार्चनहेतुना विरचिता कविता बहुशो मया ।
विविधलौकिकभावनिबन्धना अपिच धार्मिकराष्ट्रियचिन्तनाः ॥ १० ॥

भुवनशाश्वततत्त्वविमर्शना गहनमानवजीवनभावनाः ।
अवसरोचितराष्ट्रियचिन्तनाः कतिपया अधुना प्रकटीकृताः ॥ ११ ॥

मम नतोन्नतरुक्षपदावलिः स्खलनदोषयुताऽपि मनागपि ।
यदि भवेद्रसिकोत्तमतृप्तये ननु भवामि यथार्थतया कृती ॥ १२ ॥

निजमहात्मतयाऽन्यगुणाणुकानपि निभाल्य परं परितुष्यतः ।
सहृदयान् सुहृदः प्रति वेदये मम विनम्रसहर्षकृतज्ञताम् ॥ १३ ॥

कृतवतः पथदर्शनमञ्जसा समुदमाचरतो धृतिवर्धनम् ।
रसिकमित्रवरान् प्रति धीमतः प्रकटयामि भृशं कृतवेदिताम् ॥ १४ ॥

उपकृतिं कृतिमुद्रणहेतुना प्रचुरवित्तमयीं प्रतिपादकान् ।
बहुवदान्यमहाशयशासकान् प्रति परां वितनोमि कृतज्ञताम् ॥ १५ ॥

सकलशास्त्रनदीष्णसुधीश्वरैः रसिकपण्डितमण्डलमण्डनैः ।
प्रतननूत्नसमन्वयसाधकैः प्रवरपण्डितलक्ष्मणशास्त्रिभिः ॥ १६ ॥

सततकार्यसमाकुलमानसैरपि वितीर्य सुशोभनमामुखम् ।
उपकृतं यदतीवकृपान्वितैः प्रकटयामि तदर्थकृतज्ञताम् ॥ १७ ॥

श्रीरामवेलणकराय बुधोत्तमाय देवूळगावकरनामसुहृद्वराय ।
श्रीभायिशङ्करपुरोहितधीमते च विज्ञापयामि मम हार्दिकधन्यवादान् ॥१८॥

विद्याविलासभवनस्य विधायकेभ्यो ग्रन्थप्रकाशनधुरां मुदयोद्वहद्भ्यः ॥
काव्यस्य मुद्रकवराय च शाहनाम्ने ह्यावेदयामि मम हार्दिकसाधुवादान् ॥१९॥

इति निवेद्य हृदान्तरभाविकं विनयभावभरानतमानसः ।
हरिपदोत्तरचन्द्रपदाह्वयः समभिवन्द्य पुनर्विरमाम्यहम् ॥ २० ॥

साहूबिल्डिङ्ग, ऐवानशाही रोड,
गुलबर्गा ( कर्णाटक )
२६-१-८९

विद्वद्विधेयः
हरिश्चन्द्रो रेणापुरकरः



# काव्योन्मेषदर्शनम्

श्रीहरिश्चन्द्ररेणापुरकरकवेः संस्कृतभाषायां रचितः काव्योन्मेषः ४२ कविताभिर्मण्डितः। अत्र प्रयुक्तानि छन्दांसि यथा प्राचीनप्रथितानि तथैव विषयाश्चार्चिता आधुनिकाः। बहूनि काव्यानि व्यक्तिपराणि। कालिदासः, दयानन्दः, विवेकानन्दः, गान्धी, सावरकरः, सातवलेकरः जवाहरलालः, इन्दिरागान्धी, शास्त्री, लाजपतराय इत्यादयो नरविशेषाः कारणवशादत्र विषयीभूताः। तथैव स्वदेशप्रीतिरप्यत्र निमित्तं कासाञ्चित् कवितानाम्। यथा 'सा खलु धन्या भारतभूमिः' 'भो देशभक्तोत्तमाः' 'भो पाकभूशासकाः इत्यादयः। तत्र 'तावत्स्वराज्यं नहि लोकराज्यम्' 'जीवेच्चिरं भारतलोकराज्यम्' इत्यादय उल्लेखविशेषमर्हन्ति। संस्कृत-भाषामधिकृत्य 'सा देववाणी खलु सेवनीया' 'आलम्ब्यतामक्षरदिव्यवाणी' 'श्रयत विश्वशुभङ्करसंस्कृतम्' इत्यादयो लिखिताः कविता न केवलं कवेः संस्कृताभिमानं प्रथयन्ति अपि तु संस्कृतभाषावरेण्यत्वं प्रस्थापयन्ति उद्घोषयन्ति निदर्शयन्ति च। 'भीषणं दुर्भिक्षम्' 'सन्नागरा एव यथार्थ-राष्ट्रम्' इमे रचने यथा परिस्थितिचित्रणं साधयन्ति तथैव आदर्शं पुरस्कुर्वन्ति। 'कर्मगतिर्विचित्रा' 'धर्मतत्त्वसमीक्षा' चिकित्सायुते रचने न केवलमन्धश्रद्धावादिन्यौ।

वृत्तसंयोजनं कविना साधु साधितं भवतु सा शिखरिणी वा मन्दाक्रान्ता वा उपजातिर्वा। न कुत्रापि क्लिष्टता न अरुचिकारिका शब्द-योजना न सन्दिग्धता वा। कवेराशयो निश्चितः स्पष्टतया मण्डितः।

सर्वकवितानामधो रचनाकालो निर्दिष्टः। तेन ज्ञायते यदस्मिन-ग्रन्थे १९६४ ख्रिस्ताब्दत रचना सङ्कलिताः। क्वचिद्रचनाकाल-निर्देशो न कृतः यथा 'भो देश भक्तोत्तमाः' इन्दिराहौतात्म्यमित्यादिषु। १९८६ वर्षे रचिता 'आनात्मवादः खलु दुःखमूलम्' कविता कविमानसं विशदयति। आधुनिकानाचारहेतुरस्मत्तत्त्वज्ञानपराङ्मुखतेति तेन गीतम्। तस्मिन्नेव वर्षे रचितं 'विना तेन मानुष्यजन्मैव मोघम्' काव्यमपि प्राचीनतत्त्वज्ञानमनुवदति।

एवं पुरातनाधुनिकसमन्वयोऽयं काव्योन्मेषो रसिकान् विचारवत-स्तोषयतु इति कामये।

— श्री. भि. वेलणकरः
देववाणीमन्दिराध्यक्षः
गीर्वाणसुधासम्पादकश्च

इन्दिरानिवास
मुम्बापुरी - ४०० ००४

दि. ४-१-१९८९

# काव्योन्मेषः

संस्कृतं नाम भारतीयस्य सर्वतोमुखस्य जीवनस्य प्राणा इति श्रद्दधानाः सुरभारतीप्रणयिनो विघ्नराशीनविगणय्य तज्जीवितं रक्षितुं भूरि भूरि प्रयतन्ते। संस्कृतभाषया नवीनानां रचनानां प्रणयनं किल स्वार्थशून्यं महायज्ञरूपं कार्यम्। तत्कुर्वाणा अद्यापि विद्वन्मणय विराजन्त इति नूनमाश्चर्यं प्रमोदं चानुभवामः। प्रतिवर्षं नैकाः सुषमान्विता रचनाः प्रकाश्यमानाः संल्लक्ष्यन्ते संस्कृतगिरा।

"काव्योन्मेष" इतीयं प्रा. श्रीहरिश्चन्द्ररेणापुरकरस्य काव्य-पुञ्जात्मिका रचनेदमेव प्रमाणयति। आहृत्य द्विचत्वारिंशत्काव्यरत्नानां सञ्चयरुपोऽयं काव्योन्मेष आधुनिकानां पुरुषर्षभाणां परिस्थितिविशेषाणां च साधु परिचयमादधाति। अत्र ग्रन्थमणौ 'तस्मै नमो ब्रह्मणे' 'रे मूढमानव।' 'राष्ट्रनिर्माणमूलम्' 'भो देशभक्तोत्तमा' एवमादिशीर्ष-कान्वितानि, महर्षिदयानन्द - गान्धि - जवाहर - सावरकर प्रभृतींश्च पुरुषर्षभानाश्रित्य रचितानि काव्यानि विविधाकाराणि सञ्चितानि वर्तन्ते। अनुष्टुब्भिन्नानि छन्दांसि सुचारु प्रयुज्य विषयप्रतिपादने सत्कार्यप्रतिभोन्मेषः प्रकटीकृतः कविनाऽमुना। बाङ्गलामुक्तिसङ्ग्रामं विषयीकृत्य रचिते काव्ये दृश्यतां पद्यमिदम्:—

त्रिशल्लक्षमिता जना अकरुणं व्यापादिता निष्ठुरैः<br>
प्राचार्या भिषजो विधिज्ञमुखरा धीमत्तमाः पण्डिताः।<br>
तत्तच्छास्त्रकलादिकोविदजना बुद्ध्या रहो घातिताः<br>
वासोत्पाटितकोटिसङ्ख्यकजना निर्वासिता भारते॥

एतेन वैदर्भीं रीतिं प्रसादगुणञ्च कथङ्कारं द्योतयते कविरयमिति विदितं भवति।

कृतेरस्याः प्रसन्नमनसा सत्कारं कुर्वन्नहमेतादृशीनां नैककृतीनां सृष्टिमाशंसे कविवरस्यास्य।

भाईशङ्कर पुरोहितः<br>
निवृत्तप्रधानाचार्यः<br>
मुं. संस्कृतमहाविद्यालयस्य<br>
भारतीयविद्याभवनम्<br>
मुम्बई—७

दि. ३-१-१९८९

# हार्दिकमभिनन्दनम्

मित्रवर्याणां श्रीरेणापुरकरमहोदयानां संस्कृतकाव्यरचना संग्रहरूपेण रसिकानां पुरः समायातीति सविशेषमानन्दातिशयमनुभवामि। यतो हि तेषां काव्यानां प्रथमो वाचकः श्रोता वा अहमेवाभूवम्। काले काले भारतस्य संस्कृतपत्रिकासु प्रकाशितानि तान्यवलोकयामि। तान्यधिकृत्य विद्वद्भिः पाठकैर्लिखितान्युत्स्फूर्तपत्रान्यपि मया साक्षात्कृतानि। नहि तानि केवलमौपचारिकरूपानि। किन्तु काव्यानां यथार्थ रसग्रहणपराणि मूल्यमापकान्येव भवन्ति तानि। तानि दर्शं दर्शं कोऽपि काव्यसंग्रहः एकोऽवश्यं प्रकाशनीय इति नैकवारं मया ते सानुरोधं निर्बन्धिताः। किन्तु कस्या अपि घटनाया योग्यः काल एवागन्तव्यो भवति। विलम्बेनापि स कालः समायात इति भृशं सन्तोषमनुभवामि।

वर्षद्वयपूर्वमाकाशवाण्या दिल्लीकेन्द्रेणायोजिते एकस्मिन्नखिलभारतीयसंस्कृतकविसम्मेलने कर्णाटकस्य प्रातिनिध्यं रेणापुरकरमहोदयैरेव कृतमासीत्। तैस्तत्र श्राविता कविता श्रोतृवृन्दाय भृशमरोचत। तत्र नैक संस्कृतपण्डितैः सह तेषां परिचयो जातः। तेनैव काव्यसंग्रहप्रकाशनकल्पनामि मूर्तरूपोन्मुखी बभूव। प्राय एतदनुभूयते यदाधुनिकपद्धत्या शिक्षिताश् छात्राः संस्कृतस्य लेखनसम्भाषणे महत्काठिन्यमनुभवन्ति। किन्तु रेणापुरकरमहोदया अनया पद्धत्यैव शिक्षिताः सन्तोऽपि तान् सर्वानपवादभूताः सन्ति। संस्कृतभाषाया विशेषतः संस्कृतव्याकरणस्य गभीराध्ययनं कृत्वा तैस्तस्याः सर्वाणि वैशिष्टचाण्यात्मत्सात्कृतानि। अस्य संग्रहस्य काऽपि कविता अस्य निदर्शनं भवेत्।

विविधविषयानुबन्धिन्यो द्विचत्वारिंशत्कविता अस्मिन् संग्रहे समाविष्टाः सन्ति। तासु काश्चन भारतललामभूतान् कालिदास-दयानन्द विवेकानन्द - महात्मागान्धी - सातवलेकर - सावरकर - नेहरु-इन्दिरा गान्धी-प्रभृतिविभूतिश्रेष्ठान् प्रति समर्पितादराञ्जलयः सन्ति। अन्याः काश्चन यथार्थधर्मस्वरूपनिदर्शकाः अपराश्च काश्चित्सामाजिकराजकीयस्वरूपिण्यः सन्ति। संस्कृतभाषाया अनन्यसाधरणं महत्त्वं प्रतिपादयन्त्यस्तु सन्त्येव। किन्तु काले काले भारते यानि यानि महान्त्यान्दोलनानि जातानि

तानि सर्वाण्यधिकृत्यापि रेणापुरकरैर्लिखितं भवतु तद् भाषावादविषयकं वा प्रदेशवादविषयकं वा भारतपाकयुद्धं वा बाङ्ग्लामुक्तिसङ्ग्रामो वा भारते घोषितः आपत्कालो वा पञ्जाबसमस्या वा ।

एवं तेषां काव्यं नाम परितो घटितघटनानां सशक्तं चित्रणं कुर्वंस्तद्विषये तेषां चिन्तनं द्योतयति । अनेन तेषां गुणोपासकवृत्तिर्मानवमूल्यविषयका दृढा आस्था साम्प्रतं च तेषां सर्वतोमुखं ह्रासं दृष्ट्वा तेषामान्तरिकी च वेदना स्फुटीभवति ।

तेषां काव्यं न केवलं शब्दाडम्बरमयी साटोपा छन्दोरचनैव । अपितु कल्पनाविलासादिकाव्यगुणमण्डिता ललितमनोहरा सहजसुन्दरा च रचना आस्ति । तत्र सर्वत्रोपमारूपकोत्प्रेक्षाऽर्थान्तरन्यासादीनामलङ्काराणां सहजमधुरो प्रयोगो दृष्टिपथमायाति । सर्वत्रवैदर्भी रीतिः प्रसादगुणश्च दरीदृश्येते । एवंगुणविशिष्टा सरसा सालङ्कारा च कविता संग्रहरूपेण रसिकानां पुरतः समायतीति व्यक्तिशो मत्कृते गुलबर्गावासिजनानां च कृतेऽपि नूनं यथार्थाभिमानास्पदा घटना ।

दिष्टया वर्धन्ते रेणापुरकरमहोदया अनेन काव्योन्मेषप्रकाशनेन । एवमेवाग्रेऽपि तेषां काव्यगगने विमुक्तविहारो दिनानुदिनं वृद्धिं यातु नैकसुन्दरकाव्यकृतीनां च प्रकाशनं भवतु इत्यैव हार्दिकी शुभेच्छा । शुभास्ते पन्थानः सन्तु ।

एस्. बी. कॉलेज रोड,
गुलबर्गा - ५८५१०३
दि. १८ - १ - १९८९

वि. पां. देऊळगावकर
अध्यक्षः
कर्णाटकराज्यमराठीसाहित्यपरिषदः

# अनुक्रमणिका

# तस्मै नमो ब्रह्मणे

येनाकारि विशालपाररहितं ब्रह्माण्डमत्यद्भुतं
संज्ञाबुद्धिगतिक्रमादिलसितं सोद्देश्यसङ्कल्पितम् ।
संख्यातीतसुसूक्ष्मगाढनियमैः सन्दृब्धसञ्चालितं
तर्कातीतविशालवैभववते तस्मै नमो ब्रह्मणे ।। १ ।।

आदित्यादपि नैकलक्षगुणितस्थूलानसंख्यान् ग्रहान्
नित्यं खे भ्रमतः प्रचण्डरभसा ह्यन्योन्यघर्षं विना ।
स्वप्रातिस्विकसर्वशक्तिवशतो निर्माय योऽलम्बयत्
प्रज्ञातीतमतिक्रियाबलवते तस्मै नमो ब्रह्मणे ।। २ ।।

एकः सन्नपि साम्प्रदायिकजनैः सम्भाव्य नानाविध-
मोशाल्लाजिनबुद्धयीशुसदृशैर्नामान्तरैः स्मर्यते ।
ध्यानावस्थितयोगितल्लजगणैः स्वान्ते च यो मृग्यते
सर्वान्तर्गतसर्वसाक्षिविभवे तस्मै नमो ब्रह्मणे ।। ३ ।।

वेदाः शुक्रमकायमव्रणमिति स्तुन्वन्ति यं भूरिशो
मुग्धा भक्तजनास्तु चिक्यतितरां मानुष्यवद्देहिनम् ।
वेदान्तैः खलु नेति नेति बहुशो यो गीयते कुण्ठितै-
र्दुर्विज्ञेयदुरूहरूपकृतये तस्मै नमो ब्रह्मणे ।। ४ ।।

निःसङ्गोऽपि निरीहनिर्ममनिराकाङ्क्षाप्तकामोऽपि सन्
जीवानां कृतकर्मभोगसहितं मोक्षाप्तये केवलम् ।
संसाराभिधकर्मजालवयने लग्नोऽस्ति यः सर्वदा
निष्कामं हि परार्थमुद्यमभृते तस्मै नमो ब्रह्मणे ।। ५ ।।

आत्मप्राक्तनघोरकर्मवशतो दुःखाब्धिमग्नाञ्जनान्
कामक्रोधमदोग्रनक्रमथितांस्तापत्रयोत्पीडितान् ।
त्रातुं यस्य कृपाकटाक्षकणिकावर्जं न किञ्चित्क्षमं
स्नेहौदार्यदयाकृपाजलधये तस्मै नमो ब्रह्मणे ।। ६ ।।

यो जन्मान्तजराशरीररहितो यो निर्विकारो विभुः
सर्वव्यापकसर्वभूतहितकृत् सर्वज्ञसर्वेश्वरः ।
सर्वाधारसमस्तशक्तिसहितो यः सच्चिदानन्दभृत्
सर्वज्ञानमयाय मङ्गलकृते तस्मै नमो ब्रह्मणे ।। ७ ।।

शान्त्यानन्दमहोत्ससागरमहादेवाधिदेवाद् विना
निःसंज्ञाज्जडभौतिकार्थनिचयात्सौख्यं कुतः प्राणिनाम् ।
शान्ता किं तृषितस्य तृण्मृगजलात्क्षुद्वा मृदो भक्षणात्
शुद्धानन्दमयाय निर्वृतिजुषे तस्मै नमो ब्रह्मणे ।। ८ ।।

१-१-८५

## स एव पूज्यः

अस्माद्ध्रुवादपि चतुर्दशलक्षवारं
चण्डं विशालविपुलं तपनं ततोऽपि ।
संख्यातिगान् गुरुतरान् बहुकोटिकृत्वो
यो निर्ममे ग्रहगणान् मनुजैः स वन्द्यः ।। १ ।।

प्राप्य प्रसादकणिकामपि यन्मघोनः
पङ्गुः प्रयाति निमिषे गिरिशृङ्गपारम् ।
अन्धोऽपि पश्यतितरां बधिरः श्रृणोति
मूकश्च वाग्मिवरतां लभते स पूज्यः ।। २ ।।

यस्याज्ञया दिनकरोऽप्युदयास्तमेति
तिष्ठन्ति यस्य वचनाद् गिरयः समस्ताः ।
वायुश्च वाति ननु तर्जनमाप्य यस्य
गच्छाम नम्रमनसा शरणं तमेव ।। ३ ।।

यस्यानिवार्यनियमादृतवो भवन्ति
रोहन्ति बीजततयस्तरवः फलन्ति ।
भ्राम्यन्ति चैव गगने रविचन्द्रतारा
गच्छाम नम्रमनसा शरणं तमेव ।। ४ ।।

छन्नां प्रगाढतमसा प्रलये त्रिलोकीं
नानाविधं स्थिरचरं भुवनं तथैव ।
सङ्कल्पमात्ररचयन् सकलं क्षणार्धे
देवाधिदेवपरमो मनुजैः समर्च्यः ।। ५ ।।

यस्योपलभ्य रुचिराद्भुतविश्वरूपं
मीरा ननर्त मुदिता तुलसिश्च हृष्टः ।
राज्यं जहौ स सुगतो ह्यदयन्त हन्तु-
र्बापूदयाघनदयानन्देशुसिद्धाः ।। ६ ।।

यस्याविरस्ति महिमा विततो विशालः
प्रेक्षावतां प्रतिकणं प्रतिपर्णदृश्यः ।
ध्यानावगाढमुनिभिर्हृदयान्तराले
यो दृश्यते स सततं मनुजैः समर्च्यः ।। ७ ।।

निःसंख्यभास्कररुचोऽप्यतिरिक्तदीप्ते-
र्यस्यात्मतृप्तिकरवाग्विभवातिवृत्ताम् ।
साक्षात्क्रियां खलु विधाय महर्षयोऽपि
धन्या भवन्ति भुवने मनुजैः स पूज्यः ।। ८ ।।

# सुखस्यैकमूलं भवत्यात्मतत्त्वम्

कृता मानवेनोन्नतिर्भौतिकी सा
यया पक्षिवद्व्योममार्गेण याति ।
गभीरं जलं गाहते मीनवच्च
धरायां तु वस्तुं नरैर्नैव वेत्ति ॥ १ ॥

तडित्तालवृन्तैश्च विद्युत्प्रदीपैः
स्वयंचालितैर्व्योमयानैस्तथान्यैः ।
उपायैः कृतस्तेन यत्नः सुखार्थं ।
परं हा ! न लेभे सुखं मानवोऽयम् ॥ २ ॥

सुखं प्राप्तुकामेन वै मानवेन
स्वयं निर्मितोत्तुङ्गसंस्कृत्यगारम् ।
क्षणे भस्मसात्संविधातुं प्रभूणि
कृतान्यस्त्रशस्त्राणि रौद्राणि तेन ॥ ३ ॥

मिथो वैरविद्वेषमात्सर्ययुक्तो
भयातङ्कसन्देहशङ्काकुलोऽयम् ।
शयानोऽपि वातानुकूलात्मगेहे
न निद्रां स लेभे न सौख्यं प्रपेदे ॥ ४ ॥

निदानं भवत्यात्मवैमुख्यमेव
प्रकृत्यात्मनोर्ह्यात्मतत्त्वं प्रधानम् ।
परं मानवोऽयं वपुष्यात्मबुद्धिः
करोत्येव घोराणि कृत्यानि नित्यम् ॥ ५ ॥

चिदानन्दरूपं सदाऽऽनन्दकन्दं
विहायात्मतत्त्वं प्रधानाञ्जडात्किम् ।
सुखं प्राप्नुयान्मानवोऽयं कदाचिज्
जलं तृष्णिकायाः कथं कोऽपि लेभे ॥ ६ ॥

सुखस्यैकमूलं चिरं शान्तिकेन्द्रं
चिदानन्दकोषं सदा सन्निविष्टम् ।
विहायात्मतत्त्वं भ्रमत्येष मूढो
मृगो नाभिगन्धं यथा मूढबुद्धिः ॥ ७ ॥

यदा चित्स्वरूपं जरामृत्युहीनं
स्मृतेः सारयित्वाऽऽत्मतत्त्वं नरोऽयम् ।
जडे भूतसंघातमात्रे शरीरे
करोत्यात्मबुद्धिं तदा भ्रंशतेऽसौ ॥ ८ ॥

पुरा भौतिकोत्कर्षशृङ्गाधिरुढ–
मभूद्भारतं नैव दुःखास्पदं तत् ।
निदानं तु तत्पूर्वजानां बभूव
समं भौतिकेनात्मबोधो गरीयान् ॥ ९ ॥

महाज्ञानविज्ञानयुक्तोऽपि नूनं
नरो वानरत्वं ध्रुवं सम्प्रयाति ।
पतत्येव तूर्णं महानाशगर्ते
यदा जायते चात्मतत्त्वाद्वियुक्तः ॥ १० ॥

पुनः शान्तिसौख्यप्रवाहं प्रवर्त्य
समानेतुमत्रैव नाकं धरायाम् ।
विना धर्मविज्ञानयोः साहचर्याद्
गतिर्नान्यथा विद्यते सत्यमेव ॥ ११ ॥

# रे ! मूढ मानव !!

दृष्ट्वाऽपि सुन्दरतरां विपुलां विशालां
वैचित्र्यपूर्णरचनां विविधां विधातुः ।
सर्वातिरिक्तगुणशालिविधातृशिल्प !
मौनं कदर्य इव किं भजसे मनुष्य ! ॥ १ ॥

कार्तज्ञ्यभावभरितान्तरसम्प्रहृष्टाः
प्रातः प्रदोषसमये निलये निलीनाः ।
सामान्यपक्षिनिवहा अपि तं स्तुवन्ति
मौनं त्वमेव भजसे किमये मनुष्य ! ॥ २ ॥

अश्रान्तमर्मररवं पवनः प्रधावन्
नक्तं दिवं कलकलं प्रवहत्तटिन्यः ।
उत्तालवीचिनिनदंश्च महोर्मिमाली
गायन्ति तस्य महिमानमनृतकीर्तेः ॥ ३ ॥

गुञ्जद्द्विरेफमधुपाः शबलाः पतङ्गा
उद्भिद्यमानमुकुलाः प्रहसत्सुमानि ।
आनन्दधूतशिरसस्तरवो लताश्च
सङ्केतयन्ति सुतरां जगदीशकीर्तिम् ॥ ४ ॥

औषस्यरक्तिमगुणो दिवसान्तकालो
रात्रेर्घनान्धतमसं दिवसस्य दीप्तिः ।
वैश्वानरस्य खरता जलशीतता च
सङ्केतयन्ति सुतरां जगदीशकीर्तिम् ॥ ५ ॥

नीरन्ध्रनैशतिमिरान्तरभासमाना-
स्तारागणा अगणिताश्चपला घनौघे ।
जीमूतनादशुककोकिलकूजितानि
सङ्केतयन्ति सुतरां जगदीशकीर्तिम् ॥ ६ ॥

सर्वाङ्गपूर्णपरमेशगुणाढ्यसृष्ट-
भ्रंष्टां विडम्बनमयीं च गुणैर्विहीनाम् ।
साधारणीमपि मनुष्यकृतिं स्तुवंस्त्वं
रे ! मूढ मानव ! कथं नहि तं स्तवीषि ॥ ७ ॥

विश्वेशपूर्णरचनाकणिकाऽपि नूनं
दर्पोद्धतां नरमतिं चकितां विदध्यात् ।
वैयर्थ्यमेव बहुर्चाचततद्गुणाना-
माविष्करोति नितरां लघुतां नरस्य ॥ ८ ॥

किर्मीरवर्णरुचिराकृतिगन्धपूर्णं
स्वल्पं सुमं लघुतमं छदनं तथा वा ।
वैज्ञानिकाभ्युदयविस्मितमानसस्य
विज्ञानगर्वमपहर्तुमलं नरस्य ॥ ९ ॥

नित्यं विमानतरिदुर्घटनाः पठद्भि-
र्विश्वेशनिर्मितविहङ्गमपक्षियानम् ।
कादम्बमीनकलहंसकवारियानं
दृष्टं श्रुतं भवति किं पतितं च मग्नम् ॥ १० ॥

सङ्ख्याविहीनभगणग्रहतारकेषु
भ्राम्यत्स्वनन्तगगने महता जवेन ।
अन्योन्यघट्टनविनष्टमिति श्रुतं किं
सङ्घट्टनष्टशकटाननिशं पठद्भिः ॥ ११ ॥

संवत्सरैरगणितैरतियत्नजातै-
र्मनुष्यनिर्मितसुसंस्कृतिभव्यधाम्नः ।
सामान्यभूमितलकम्पमुहूर्तजातो
नाशस्तदीयलघुतां प्रकटीकरोति ॥ १२ ॥

२१-१-६९

# विना तेन मानुष्यजन्मैव मोघम्

प्रभोर्दिव्यभव्यं पराशक्तिपूर्ण-
मतीवाद्भुतं भूतसर्गातिरिक्तम् ।
यथा मानव ! त्वं विधानं ह्यपूर्वं
तथा चिन्तय त्वं विधेयं स्वकीयम् ।। १ ।।

दयासिन्धुना तेन तुभ्यं प्रदत्तं
शरीरं ह्यनर्घं सुसम्पन्नमेतत् ।
विवेकैकधर्मा महाशक्तिपूर्णा
मतिश्चापि दत्ता दुरापाऽन्यजीवैः ।। २ ।।

निरोधापवर्गस्य नूनं निदानं
मनोनामधेयं महावेगयुक्तम् ।
विमानं प्रदत्तं चमत्कारपूर्णं
परं मानव ! त्वं सुखी नैव जातः ।। ३ ।।

अयोध्यापुरीयं नवद्वारयुक्ता
तनुस्ते मताऽऽसीत्तरिर्दिव्यरूपा ।
भवाम्भोधिपारं सुखं संप्रयातुं
चिदानन्दरूपं परं धाम यातुम् ।। ४ ।।

परं कामक्रोधाग्निना ज्वालिता सा
पुरिर्दिव्यरूपा त्वया मूढबन्धो ! ।
यथा काष्ठिकश्चन्दनं मूढबुद्धिः
क्षिपत्यग्निमध्ये स चाङ्गारहेतोः ।। ५ ।।

क्षणं चिन्तय त्वं विवेकप्रधान !
परब्रह्मशक्तेर्महासंविधान !
कुतस्त्वं समायाश्च कुत्रासि गच्छन्
निमित्तं च किं ते भवत्यत्र बन्धो ! ॥ ६ ॥

इदं जन्म नाद्यं न वा नूनमन्त्यं
चलन्ती तवेयं चिराद् दीर्घयात्रा ।
प्रवर्तेत जन्मान्तरेष्वत्र तावच्
चिदानन्दकन्दस्य यावन्न सिद्धिः ॥ ७ ॥

गृहीत्वा स्वकर्माख्यरज्जुं शरीरी
प्रयात्युच्चनीचं स जन्मान्तरेषु ।
भवेन्मृत्युपाशात्स मुक्तः स्वकृत्यैः
पतेद्वा पुनर्जन्ममृत्योश्च चक्रे ॥ ८ ॥

महाभूतसंघातमात्रं नहि त्वं
न वा केवलं चात्मतत्त्वं ह्यसि त्वम् ।
प्रकृत्यात्मनोः सङ्गमस्त्वं यथासि
समानानुरागस्तयोस्त्वं भवेथाः ॥ ९ ॥

न भोगाय बन्धो शरीरं तवेदं
न वा केवलं त्यागशीलं तदिष्टम् ।
भवत्यात्मसाक्षात्कृतेः साधनं तद्
ह्यतस्त्यक्तभावेन भोगान् गृहाण ॥ १० ॥

वसन्नत्र मानुष्यदेहे यदि त्वं
समर्थो न साक्षाद्विधातुं महेशम् ।
कदाचिन्न कल्पान्तकालेऽपि शक्यं
भवेद् दर्शनं तस्य देवस्य कर्तुम् ॥ ११ ॥

असंख्यातजन्मान्तरैष्वत्र शक्या
परेशस्य साक्षात्क्रिया मानवेन ।
यतस्तत्क्षमं ज्ञानचक्षुर्दुरापं
मनुष्येतरैर्भूतजातैर्न लभ्यम् ॥ १२ ॥

इहैवात्र दुष्प्राप्यमानुष्ययोनौ
भवेच्चेन्न सन्दर्शनं ब्रह्मशक्तेः ।
विनष्टिर्महिष्ठा ध्रुवं संभवित्री
श्रुतिर्नूनमित्थं ह्यभीक्ष्णं दिदेश ॥ १३ ॥

अतो मानवैरात्मकल्याणकामैः
प्रयत्नो महान् योगमार्गानुसारम् ।
विधेयः सदैवात्मसन्दर्शनार्थं
विना तेन मानुष्यजन्मैव मोघम् ॥ १४ ॥

१५-२-८६

## वाञ्छसि बन्धो प्रेम यदि त्वम्

स्वार्थविचारं भोगविलासं
केवलमात्रं स्वात्मरतित्वम् ।
मानव नूनं वर्जय नित्यं
वाञ्छसि सत्यं प्रेम यदि त्वम् ॥ १ ॥

त्यागतपोभ्यां शोधय बन्धो !
जीवनमार्गादर्शतलं त्वम् ।
चञ्चलचित्तं स्थापय गाढं
वाञ्छसि नूनं प्रेम यदि त्वम् ॥ २ ॥

नश्वरविश्वं गत्वरदेहं
पार्थिवभोगासक्तिविचारम् ।
चिन्तय मा त्वं जीवनसारं
वाञ्छसि बन्धो प्रेम यदि त्वम् ॥ ३ ॥

त्यागविशिष्टं भोगविहीनं
वीक्ष्य सुसूक्ष्मं सृष्टिविधानम् ।
आचर बन्धो तादृशमेव
वाञ्छसि सत्यं प्रेम यदि त्वम् ॥ ४ ॥

विश्वविधातुः स हरित्सु
व्याप्तविताने त्यागकृशानौ ।
स्वात्महविस्त्वं ह्यर्पय बन्धो
वाञ्छसि नूनं प्रेम यदि त्वम् ॥ ५ ॥

उज्ज्वलदिव्यं भव्यविशालं
निर्जरनित्यं पुण्यपवित्रम् ।
प्रेम न लभ्यं पार्थिवचित्तै-
श्चञ्चलवृत्तैर्भृङ्गचरित्रैः ॥ ६ ॥

आत्मयुगस्याद्वैतबिरूढं
भावनिगूढं चान्तरगूढम् ।
द्वन्द्वविहीनं सन्ततसान्द्रं
यन्मिलनं तत्प्रेमपदाख्यम् ॥ ७ ॥

सिन्धुतरङ्गे निर्झरनीरे
वायुविहारे पक्षिविरावे ।
मर्मरशब्दे मेघनिनादे
त्वं श्रृणु बन्धो सुस्वरगीतम् ॥ ८ ॥

" प्रेम कुरुध्वं प्रेम कुरुध्वं
प्राणिन " इत्थं गायति नित्यम् ।
स्थावरजीवः स्निग्धनिसर्गो
रे ! कुरु कर्णे मानव ! मूढ ! ॥ ९ ॥

कोमलचण्डौ चन्द्रपतङ्गौ
शीतलतिग्मौ वारिकृशानू ।
पश्यत कीदृग् ह्याचरतस्तौ
वत्सलवृत्त्या सत्यपि भेदे ॥ १० ॥

निर्झरनद्यः सिन्धुतटिन्यो
भूमिमयूखाः सानुसमीराः ।
प्रेमनिबद्धाः पश्य मिलन्ति
सृष्टिविधातुः पद्धतिरेषा ॥ ११ ॥

देवदुरापं मानवदेहं
प्राप्य न मर्त्यः सुखितो जातः ।
विस्मृतिगर्ते तेन हि क्षिप्तं
विश्वविधातुः सृष्टिविधानम् ॥ १२ ॥

१९-११-६९

# वृथा चन्द्रताराग्रहाणां जयोऽसौ

जितश्चन्द्रमा मानवेनाम्बरस्थो
जिगीषुर्दरीदृश्यते शुक्रभौमौ
विजेताऽपि ताराग्रहाणां समूहान्
परं तेन साध्यं भवेत् किं तदीयम् ।। १ ।।

जितश्चन्द्रमास्तेन तारापथस्थः
परं चन्द्रमाः स्वान्तरस्थो जितो नो ।
जितो भूतसङ्घो न तु स्वान्तरङ्गो
जितं बाह्यविश्वं न तु स्वान्तरस्थम् ।। २ ।।

दयानन्दकन्देन सर्वेश्वरेण
सुखार्थं प्रदानीकृतं विश्वमेतत् ।
हृषीकार्चकेनात्महीनेन तेन
कृतं दुःखशोकालयं मानवेन ।। ३ ।।

धरा शोभना रत्नगर्भान्नपूर्णा
जलं शीतलं निर्मलं जीवनाख्यम् ।
नभोमण्डलं प्राणवायुश्च सर्वं
नरेणाणुविस्फोटसन्दूषितं च ।। ४ ।।

मही शोकपूर्णान्तरिक्षं विषाक्तं
जलं क्ष्वेडयुक्तं ह्यपेयं नितान्तम् ।
अभक्ष्यीकृतं सर्वमेवान्यभक्ष्यं
पुनश्चन्द्रिकां दोषदुष्टां चिकीर्षुः ।। ५ ।।

सुधास्यन्दिनी लोकनेत्राभिरामा
कवीनां प्रिया प्रेमिणां चाभिकाम्या ।
अधन्यात्करस्पर्शमात्रान्नरस्य
ध्रुवं चन्द्रिका प्राणहीना बभूव ।। ६ ।।

वराको नरो नैव जानाति सत्यं
विशालं हि विश्वं भवत्यन्तरस्थम् ।
जयो यस्य बाह्याद् गरीयान् यथार्थं
निदानं परं सौख्यशान्त्योश्च नूनम् ।। ७ ।।

जयो दुष्करो दुर्निवारेन्द्रियाणां
मनोनिग्रहो निग्रहः श्वापदानाम् ।
जयः षड्रिपूणां जयस्तात्त्विकोऽसौ
वृथा चन्द्रताराग्रहाणां जयोऽसौ ।। ८ ।।

जिता भूपतीनां सहस्त्रैर्धरित्री
जिताः कोटिशो मानवानां च सङ्घाः ।
परं धन्यधन्यः क्षितौ राघवोऽसौ
जिगायात्मसाकं प्रजानां मनांसि ।। ९ ।।

पृथिव्यां जनान् कोटिशो वासहीनान्
क्षुधापीडितान् दुःखदारिद्र्यदूनान् ।
विहायाब्जशो रुप्यकाणां व्ययः किं
भवेद्युक्तरूपो जये चान्द्रभूमेः ।। १० ।।

असंख्यातलोकेषु नूनं धरायां
क्षुधाव्याधिदारिद्र्यसम्पीडितेषु ।
महामौर्ख्यमेवं जये चन्द्रिकाया
बृहद्वित्तसम्पद्व्ययो मानवस्य ।। ११ ।।

मिथो बन्धुतास्नेहसौहार्दहीनो
नरो यत्र कुत्रापि कामं प्रयातु
जयं चन्द्रताराग्रहाणां करोतु
त्रिकालेऽपि सौख्यं भवेन्नैव तस्य ॥ १२ ॥

नभस्तुङ्गतामाप बुद्धिर्नरस्य
परं मानसं प्राप पातालगर्तम् ।
गतिर्नैव यावद्द्वयोरेकरूपा
चिरं सौख्यशान्ती दिवास्वप्न एव ॥ १३ ॥

प्रकृत्या गुणाविष्कृतिर्बुद्धिधर्मो
जगत्सौख्यहेतोश्च तेषां प्रयोगः ।
दयास्नेहसौभ्रात्रवच्चित्तधर्म-
स्ततो ज्ञानिभिः संस्कृतैरेव भाव्यम् ॥ १४ ॥

वसन्नुच्चहर्म्ये वसानः सुवासो
विमानेन धावन् स्पृशंश्चन्द्रलोकम् ।
सुसभ्योऽपि मानुष्यसंस्कारहीनो
नरो वानरो लोकसन्तापहेतुः ॥ १५ ॥

दयाबन्धुतास्नेहसौजन्ययुक्तं
मनो निश्चलं निर्विकल्पं विधेयम् ।
मतिः सात्त्विका लोककल्याणकामा
विधेया नरैरात्मकल्याणकामैः ॥ १६ ॥

१८-२-१९७२

# कर्मगतिर्विचित्रा

केचिद्वदन्ति बलवद् भुवि भाग्यमेव
केचिच्च पौरुषमिह प्रबलं वदन्ति ।
सूक्ष्मेक्षिकाविहितवीक्षणचिन्तनोऽहं
पश्यामि मानवगणं विधिनिघ्नमेव ।। १ ।।

तन्वन्तु नाम मनुजाः शतशः प्रयत्नान्
कामं कुशाग्रधिषणामपि चालयन्तु ।
प्रारब्धकर्मवशतस्तु विपच्यमानं
मोघं विधातुमिह कर्मफलं न शक्ताः ।। २ ।।

प्रज्ञान्वितोऽपि चतुरोऽपि विचक्षणोऽपि
सूक्ष्मातिसूक्ष्मधिषणागुणमण्डितोऽपि ।
प्रारब्धकर्मपरिपाकवशान्नरोऽयं
कार्यं करोति विवशो विपरीतमेव ।। ३ ।।

कर्ता स्वतन्त्र इह कर्मविधौ मनुष्यः ।
प्राप्तुं फलं तु सुतरां परतन्त्रवृत्तिः ।
कर्ता चराचरभुवो भुवनस्य गोप्ता
नूनं प्रयच्छति फलं स्वविधानयोगात् ।। ४ ।।

मर्त्यैः कृतं प्रबलप्राक्तनकर्मजात-
मीष्टे कदाचिदधुनातनकर्मणोऽपि ।
तस्मात्फलं न लभते मनुजो यथेष्टं
मानुष्यकर्मगतिरस्ति नितान्तगूढा ।। ५ ।।

मेधाविधीरनरवीरधुरन्धरोऽपि
जानन्नपीह तपनीयमृगं मृषोद्यम् ।
लुब्धस्तथापि रुरवे रघुनन्दनोऽसौ
मग्नश्च दुःखजलधौ विवशो वराकः ॥ ६ ॥

कार्यं करोति मनुजो बहुशोऽप्यनिच्छ-
न्निच्छन्नपीह नहि कर्तुमसौ समर्थः ।
सम्यग्विचार्यं कुरुते विपरीतमेव
कर्तव्यकर्मकरणेऽपि नरो न शक्तः ॥ ७ ॥

पापं करोति सततं सुखमेधते च
पुण्यं करोति बहुधा परितप्यते च ।
इत्थं परस्परविरुद्धगतिं विलोक्य
ज्ञातुं न शक्यमिह कर्मगतिर्विचित्रा ॥ ८ ॥

विश्वेतिहासबहुचर्चितराजकानां
लोकोपकारनिरतर्षिमनीषिणां च ।
दृष्ट्वा विचित्रचरितं बहुधा दुरन्तं
ज्ञातुं न शक्यमिह कर्मगतिर्विचित्रा ॥ ९ ॥

रामोऽपि घोरवनवासमसौ विषेहे
कृष्णोऽपि लुब्धकशरेण हतो महात्मा ।
गान्धी - मसीह - सुकरेतिस - लिंकनानां
नान्या कथा भवति कर्मगतिर्विचित्रा ॥ १० ॥

अदृश्यगूढपरमेशपराध्यंशक्ति-
र्ब्रह्माण्डचक्रपरिवृत्तिपरा विशाला ।
शक्तावगन्तुमिह कर्मफलं च कालं
सर्वज्ञतन्त्रमखिलं न नरावगम्यम् ॥ ११ ॥

यद्यत्समाचरति कर्म नरः स्वतंत्रः
तत्तत्फलं स जनने जननान्तरे वा ।
प्राप्नोति नूनमिति शास्त्रविदो वदन्ति
कस्मिन् कथं कियदितीश्वर एव वेत्ति ।। १२ ।।

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
द्रक्ष्याम आप्तसुहृदो मुदिता भवेम ।
इत्थं विचारयति यानगते जनौघे
हा हन्त ! यानमभवज्जलधौ निमग्नम् ।। १३ ।।

छायाभिलाषी पथिको नितरां प्रतप्तः
प्रच्छायशीतलतरुं विधिनाऽधिगम्य ।
यावत्स्वपीति विटपाभिहतः स तावत्
सत्यं नरः परवशो नियतेरधीनः ।। १४ ।।

मात्रङ्कशायिशिशवः कृषकाश्च खिन्ना
आमुक्तकौतुककरा ललना नवोढाः ।
सुस्वादुस्वप्ननिरताः सहसा क्षणार्धे
भूकम्पमात्रनिहताः क्षणदाक्षयात्प्राक् ।। १५ ।।

भाग्येऽनुकूल इह यत्नगणाः फलन्ति
यत्नैर्विनाऽपि नियतिर्न फलं ददाति ।
इत्थं विलोक्य विधिकर्मगतिं दुरूहां
भाव्यं नरैः सततशोभनयत्नवद्भिः ।। १६ ।।

२१-३-७३



# श्रयत विश्वशुभङ्करसंस्कृतम्

शृणुत भो ! प्रियभारतबन्धवः
प्रणयिनः प्रणयं मम हार्दिकम् ।
हृदि भवेद्यदि भारतमङ्गलं
श्रयत विश्वशुभङ्करसंस्कृतम् ॥ १ ॥

उपनिषच्छ्रुतिशास्त्रपुराणभृद्
विगतभारतवैभवबोधकम् ।
विमलभारतसंस्कृतिदर्पणं
श्रयत विश्वशुभङ्करसंस्कृतम् ॥ २ ॥

सुरगणैरभिनन्दितवन्दितं
कविशिरोमणिवृन्दसमर्चितम् ।
मुनिवरैश्च तपोबलवर्धितं
श्रयत विश्वशुभङ्करसंस्कृतम् ॥ ३ ॥

मधुरनाट्यकथारसपूरितं
सरसमञ्जुलकाव्यविशोभितम् ।
गहनदर्शनतत्त्वविमण्डितं
श्रयत विश्वशुभङ्करसंस्कृतम् ॥ ४ ॥

भरतखण्डमखण्डमिदं पुनः
खलु विधायकधायकसूत्रकम् ।
विततमाहिवमज्जलधेः समं
श्रयत सर्वशुभङ्करसंस्कृतम् ॥ ५ ॥

विविधजातिगिरापरिभूषितं
रुचिरवर्णविभावितभारतम् ।
विघटनाद्यदि वाञ्छथ रक्षितुं
श्रयतविश्वशुभङ्करसंस्कृतम् ॥ ६ ॥

विगतभारतदीर्घयुगान्तरे
भवति याऽखिलवाङ्मयवाहनम् ।
अपि च तर्कणचिन्तनसाधनं
भवितुमर्हति सैव हि राष्ट्रवाक् ॥ ७ ॥

यदि विहाय वरां सुरभारतीं
भरतराष्ट्रगिरोच्चपदेऽपराम् ।
प्रचलितां निदधीमहि चेद् गिरां
कलहकारणतां ननु तद् व्रजेत् ॥ ८ ॥

प्रबलदुश्चलितं ननु भाषिकं
भरतदेशविखण्डनसूचकम् ।
यदि निवारयितुं कलहं स्पृहा
श्रयत सर्वशुभङ्करसंस्कृतम् ॥ ९ ॥

विविधशास्त्रगताङ्गलपदावलिं
रचयितुं सुकरं निजभाषया ।
गहनभावनिबन्धनपेशलं
श्रयत विश्वशुभङ्करसंस्कृतम् ॥ १० ॥

उपरतामपि वाग्लतिकां पुन-
र्ह्यमरनिर्जरजीवनदायकम् ।
सकलभूतलवाक्प्रभवं मह-
च्छ्रयत विश्वशुभङ्करसंस्कृतम् ॥ ११ ॥

११-७-६७

# सा देववाणी खलु सेवनीया

यस्याः प्रसूताः किल विश्वभाषा
रत्नाकराद्रत्नगणा इवैते ।
यथोष्णरश्मेश्च समस्ततेजः
सा देववाणी सकलैः सुसेव्या ।। १ ।।

शश्वास यस्यां प्रथमो मनुष्यो
यस्यां प्रणिन्ये प्रथमः प्रबन्धः ।
जगुश्च यस्यां प्रथमा कवीन्द्राः
सा देववाणी खलु सेवनीया ।। २ ।।

अनन्यसाधारणमस्ति यस्याः
साहित्यपाथोनिधिकोषजातम् ।
वैविध्यगाम्भीर्यगुणातिशायि
सा देववाणी खलु सेवनीया ।। ३ ।।

यच्छब्दनिर्माणकलापटुत्वं
शब्दार्थमाधुर्यगुणाकरत्वम् ।
प्राच्यप्रतीच्योभयसूरिमान्यं
सा देववाणी खलु सेवनीया ।। ४ ।।

यच्छब्दशास्त्रं भुवनेऽद्वितीयं
साहित्यशास्त्रं नितरां समृद्धम् ।
लिपिश्च वैज्ञानिकरीतिपूर्णा
सा देववाणी ननु सेवनीया ।। ५ ।।

आध्यात्मिकं भौतिकदैविकं च
सत्यं शिवं सुन्दरमित्युदात्तम् ।
यज्ज्ञानममत्युत्कटकोटिलङ्गि
सा देववाणी ननु सेवनीया ॥ ६ ॥

समस्तवेदोपनिषद्वराणा-
मारण्यकानामपि ब्राह्मणानाम् ।
पुराणरामायणभारतानां
वेदान्तसांख्यादिकदर्शनानाम् ॥ ७ ॥

चार्वाकजैनार्हतनास्तिकानां
शाक्तागमानामथ शैविकानाम् ।
संवाहिका तान्त्रिकमान्त्रिकाणां
नूनं सुसेव्या सुरभारती सा ॥ ८ ॥

शाकुन्तले चोत्तररामवृत्ते
रघौ कुमारेऽपि च मेघदूते ।
माघे किराते ह्यथ नैषधीये
कादम्बरीवासवदत्तयोश्च ॥ ९ ॥

अन्येषु काव्येषु च नाटकेषु
काव्यामृतं सन्निहितं प्रकामम् ।
पातुं समीहा रसिकोत्तमाश्चे-
न्नूनं सुसेव्या सुरभारती सा ॥ १० ॥

प्राचीनभव्योज्ज्वलसभ्यताया
मानव्यनिष्ठार्यसुसंस्कृतेश्च ।
आधारभूतामसुधारकां च
समाश्रयध्वं सुरभारतीं ताम् ॥ ११ ॥

आसेतुशैलाधिपसन्ततं त-
मस्मत्प्रियं भारतवर्षदेशम् ।
आबध्दुमिच्छा यदि चैक्यसूत्रे
सा देववाणी खलु सेवनीया ।। १२ ।।

भाषाविवादानलसम्परीतं
प्रान्तीयतातीव्रविषार्दितं च ।
संरक्षितुं भारतवर्षदेशं
दिव्यौषधं सा खलु देववाणी ।। १३ ।।

कालादनन्तादपि भारतस्य
साहित्यसंगीतकलेतिहास- ।
प्रधानसंवाहकमाध्यमं या
सा देववाणी खलु राष्ट्रभाषा ।। १४ ।।

विभिन्नभाषामतसम्प्रदाय-
क्रीडास्थलीभूतपवित्रधाम्नः ।
स्वर्गापवर्गास्पदभारतस्य
सा देववाणी खलु राष्ट्रभाषा ।। १५ ।।

अहर्निशं तं परिवर्धमानं
प्रचण्डवैज्ञानिकशब्दराशिम् ।
स्वभाषया सम्परिवर्तनाय
सा देववाणी ननु सेवनीया ।। १६ ।।

उदात्तभव्योज्ज्वलकान्तकान्ति-
र्लालित्यमाधुर्यगुणाढ्यशोभा ।
हृद्याऽनवद्या रमणीयरूपा
सा देववाणी खलु सेवनीया ।। १७ ।।

चिरान्मृतानामपि वाग्लतानां
धन्यां पुनर्जीवनदानदक्षाम् ।
मृतेति दिव्यामृतदेववाणीं
सम्भावयन्तः खलु मूढचित्ताः ॥ १८ ॥

सञ्जीवनी सा कविकल्पनायां
स्वः कामदाकल्पलतामृतानि ।
अतः सुसेव्याऽमृतदेववाणी
भूकल्पवृक्षामृतकामधेनुः ॥ १९ ॥



## आङ्ग्लीधुरं क्षिपत सत्वरमात्मकण्ठात्

हे ! भारतीयजनभाग्यविधातृवर्या !
इच्छास्ति चेद्भूरतवर्षयथार्थमुक्तेः ।
देशस्य मानसिकदास्यनिदानभूता-
माङ्ग्लीधुरं क्षिपत सत्वरमात्मकण्ठात् ॥ १ ॥

अप्यस्ति कोऽपि विषयो भुवने स्वतन्त्रः
काले गतेऽपि दशकद्वयवत्सरीये ।
स्वत्वाभिमानरहिता जनता यदीया
हित्वा स्वसंस्कृतिगिरो श्रयते विदेश्ये ॥ २ ॥

विद्याविदग्धमतिपाटवलब्धवर्णा
मान्या विचक्षणधियः परिचिन्तयन्तु ।
किंस्वित्तया ननु विमुक्तया विधेयं
त्राणं स्वसंस्कृतिगिरा लभते न यत्र ॥ ३ ॥

को वा गुणो विगुणभारतमुक्ततायां
यस्यां जनाः स्वगतगौरवविस्मृतान्धाः ।
पाश्चात्यजीवनविधिं बहुमन्यमाना
बद्धा भवन्ति खलु मानसदास्यपाशे ॥ ४ ॥

भूपृष्ठलब्धजनिसंस्कृतिमातृकल्पां
त्यागप्रधानमहनीयगुणां स्वकीयाम् ।
विस्मृत्य भोगपरमां प्रकृतिप्रधाना-
मन्यां निकृष्टतमसंस्कृतिमाश्रयन्ते ॥ ५ ॥

त्रैलोक्यरूढविदिताखिलवाक्प्रसूतिं
सर्वाङ्गपूर्णसुविशालसमृद्धरूपाम् ।
त्यक्त्वा स्वकीयवरसंस्कृतदेववाणीं
चित्रं ! जनाः सततमाङ्ग्लगिरां भजन्ते ॥ ६ ॥

मुष्टिप्रमेयपरवाक्प्रियभारतीयैः
स्वातीतगौरवयशोमहिमानभिज्ञैः ।
स्वातन्त्र्यनिश्वसितमात्मगिरां निरस्य
ह्यारोप्यते प्रसभमाङ्ग्लगिरा स्वदेशे ॥ ७ ॥

मान्या ! ब्रुवन्तु किमतःपरमस्ति निन्द्यं
यद्भारतीयजनता व्यरुणत्प्रचण्डम् ।
आङ्ग्लाधिराज्यसमये सकलं तदीयं
स्वायत्तशासनयुगे परिपाल्यतेऽद्य ॥ ८ ॥

आङ्ग्लाधिपैरपि च यद्भुविसार्वभौमैः
शक्यं बभूव नहि सार्धशताब्दकाले ।
आङ्ग्लीप्रचारकरणस्य तदेव कार्यं
संपाद्यतेऽद्य तरसा बत ! भारतीयैः ॥ ९ ॥

मेषायमानमृगराजशिशोरिवेदं
लज्जास्पदं भवति किं नहि तस्य नाम ।
राष्ट्रस्य मानधनधीरधुरन्धरस्य
विस्मृत्य पूर्वचरितं चरतोऽपरस्य ? ।। १० ।।

विद्यालयाधिकरणाऽपणवीथिकासु
राज्यप्रशासनविधानसभागृहेषु ।
यावद्भवन्ति नहि लोकगिराः प्रयुक्ता-
स्तावद्यथार्थविधिकं नहि लोकराज्यम् ।। ११ ।।

यावद्धि राज्यपदमाङ्ग्लगिराऽधिरूढा
यावच्च सर्वविधशिक्षणमाध्यमं सा ।
तावन्न सम्भवति लोकगिरां विकासः
संवर्धते वटतले नहि बालवृक्षः ।। १२ ।।

ग्रन्थास्तु नैव सुलभा ननु पाठनीयाः
प्राक्प्रापाठनाद्भवतु तत्स्वगिरानुवादः ।
इत्येष माऽस्तु सुधियः ! वितथापदेशः
किं कोऽपि वेत्ति तरणं जलगाहनात्प्राक् ।। १३ ।।

जापानजर्मनिसमाँल्लघुविश्वदेशा-
नालोकयन्तु सुहृदो भुवनप्रसिद्धान् ।
वैज्ञानिकाभ्युदयतुङ्गशिखाधिरूढा-
न्नूनं स्वराष्ट्रगिरयैव विकाससिद्धान् ।। १४ ।।

इस्त्रायलाख्यनवजातलघिष्ठराष्ट्रं
पश्यन्तु तावदिदमेव सुधन्यधन्यम्
उज्जीव्य येन निजहिब्रुगिराऽपि लुप्ता
प्रांशुं स्वजानपदवाक्पदवीमनायि ।। १५ ।।

आङ्ग्लौनृशंसभरसंवहनाभिशापो
यावन्न राष्ट्रशिरसो भविता निरस्तः ।
तावत्कदापि न भवेत्खलु संविकासो
देशस्य सर्वगतसर्जनशीलशक्तेः ॥ १६ ॥

१-७-६७

## आलम्ब्यतामक्षरदिव्यवाणी

असंख्यकाव्योज्ज्वलरत्नगर्भा
लालित्यमाधुर्यगुणाढ्यशोभा ।
अनन्यसाधारणभास्वराभा
संसेव्यतामक्षरदिव्यवाणी ॥ १ ॥

देवर्षिसंवर्धितपुण्यशीला
कवीन्द्रसङ्कीर्तितदिव्यगाथा ।
दिगन्तविश्रान्तयशःसुगन्धा
सम्मान्यतामक्षरदिव्यवाणी ॥ २ ॥

उदात्तभव्योज्ज्वलदीप्तकान्तिः
प्रसन्नचेतोहरसौकुमार्या ।
हृद्यानवद्यान्तरबाह्यरूपा
संराध्यतामक्षरदिव्यवाणी ॥ ३ ॥

समस्तभूमण्डलवाक्प्रसूति –
विश्वैक्यसौख्याक्षयशान्तिसूतिः ।
परापरज्ञानमहाविभूतिः
सम्भाव्यतामक्षरदिव्यवाणी ॥ ४ ॥

प्रसादमाधुर्यरसार्द्रकान्त्या
विशालसाहित्यमनोज्ञभासा ।
व्याघूर्णितासंख्यकवीन्द्रवर्या
सन्धार्यतामक्षरदिव्यवाणी ॥ ५ ॥

संसारसाहित्यशिखायमान –
प्रचण्डभव्योत्कटवाङ्मयेन ।
विस्मापयन्ती बुधसार्वभौमा – ॥
नालम्ब्यतामक्षरदिव्यवाणी ॥ ६ ॥

स्वर्गस्थदेवैरपि वन्दनीया
भूमण्डलस्थैः किमु नाभिवन्द्या ।
वाग्देवताभालविभूषणाङ्का
सङ्कीर्त्यतामक्षरदिव्यवाणी ॥ ७ ॥

सुधातिशायिस्वरसप्रकर्षा –
न्निर्धूतपीयूषरसाभिमाना ।
सरस्वती निर्झरिणीव मूर्ता
जेगीयतामक्षरदिव्यवाणी ॥ ८ ॥

स्वापूर्वमाधुर्यगुणेन नूनं
सुधामपि स्वर्गगतां विधात्री ।
भूमण्डलीयामृतकामधेनुः
सम्पूज्यतामक्षरदिव्यवाणी ॥ ९ ॥

स्फुरत्प्रभादीप्तिरिवाभिरामा
त्रैलोक्यभाषासु समुल्लसन्ती ।
छायेव लावण्यमयी सुरम्या
संश्रीयतामक्षरदिव्यवाणी ॥ १० ॥

सद्वृत्तचारित्र्यसुशीलतानां
देशे निरोध्दुं विनिपातमद्य ।
सौजन्यसौशील्यखनिर्विशाला
संश्रीयतामक्षरदिव्यवाणी ।। ११ ।।

वृत्तस्य कर्त्री विनयस्य दात्री
शीलस्य भर्त्री नयनीतिधात्री
वैमल्यसारल्यशुचित्वदात्री
संसेव्यतामक्षरदिव्यवाणी ।। १२ ।।

चारित्र्यपावित्र्यविकासयित्री
मानुष्यसाधुत्वविबोधयित्री ।
आचारसंस्कारविवर्धयित्री
संसेव्यतामक्षरदिव्यवाणी ।। १३ ।।

सौजन्यचारित्र्यसुवृत्तहीना –
नुद्दामकामार्थपरात्मयूनः ।
कर्तुं सुसंस्कारसुवृत्तशीला –
नालम्ब्यतामक्षरदिव्यवाणी ।। १४ ।।

विश्वैक्यबन्धुत्वकुटुम्बितानां
त्रैलोक्यशान्त्युत्तमतत्त्वजातम् ।
जोघुष्यमाणा जगति प्रकाम –
माश्रीयतामक्षरदिव्यवाणी ।। १५ ।।

प्रचण्डविज्ञानविनाशभीत्या
प्रकम्पमानं भुवनं रिरक्षोः ।
धर्मस्य सम्यक् प्रतिबोधयित्री
संश्रीयतामक्षरदिव्यवाणी ।। १६ ।।

धर्मो हि नूनं श्रुतिशास्त्रमूलः
शास्त्रादिमूलं सुरभारतीयम् ।
अतोऽनुशील्या सुरवाक् सयत्नं
जिज्ञासुभिर्मानवधर्ममूलम् ।। १७ ।।



## राष्ट्रनिर्माणमूलम्

भोगासक्ता विषयनिरता देहमात्रं भजन्तो
न ध्यायन्तः किमपि वपुषोऽन्यात्मतत्त्वं विविक्तम् ।
चार्वाकाणामसुरसरणीं भावयन्तो वरिष्ठा-
मुद्वृत्तोच्छृङ्खलयुवजना राष्ट्रचिन्तानिमित्तम् ।। १ ।।

देशं ह्यत्याधुनिकविषयं नायकैः कर्तुकामै-
र्व्यर्थालीकप्रगतिपरतानूतनत्वादिनाम्ना ।
यद्यद् प्रत्नं सकलमपि तन्निर्विवेकं द्विषद्भि-
रुद्दामत्वं जनितमिह यत्तस्य नूनं विपाकः ।। २ ।।

आदर्शः सच्चरितमहनीयस्य कस्यापि नेतु-
र्यूनामग्रे परमवरणीयस्य नैवाधुनाऽस्ति ।
किं शिक्षेरन् नवयुवजना लोकनिर्वाचितेभ्यो
भ्रष्टाचारप्रचुरसचिवामात्यसंसज्जनेभ्यः ।। ३ ।।

आदर्शोऽभूद् हिमगिरीसमोत्तुङ्गलब्धप्रथानां
गान्धिन्हेरूप्रतिमनरवीराग्रणीनां विशालः ।
कालोऽयं तु क्षपितचरितोच्छ्रायविन्ध्योपमानां
खर्वादर्शी कथमिव भवेदुच्चलक्षाभिलाषी ।। ४ ।।

नीतिन्यायप्रगतिसमताधर्मतत्त्वापयातं
देशं नाशोन्मुखमतितरां तीव्रगत्या प्रयान्तम् ।
तुङ्गोच्छ्रायं पुनरपि समुन्नेतुमुत्कर्षशृङ्गं
नूनं धीरैर्विमलचरितैर्नायकैर्भाव्यमाद्यम् ॥ ५ ॥

स्वातन्त्र्योर्ध्वं भरतविषयोत्कर्षकामाग्रणीभि-
र्व्योमस्पर्शिप्रचुरभवनावासनिर्माणशालाः ।
भाक्रानागार्जुनसममहान्ह्रादिनीसेतुबन्धाः
दीर्घाध्वानो गिरिवननदीः पाटयित्वाऽक्रियन्त ॥ ६ ॥

हा हन्तास्य प्रचुरनवनिर्माणकार्यस्य केन्द्रं
चैतन्यात्मा स्मरणसरणेः सारितोऽसौ मनुष्यः ।
तन्निर्माणे सुचरितमये कोऽपि यत्नो न जात-
स्तस्माद्देशे परमविफलो योजनानां प्रयासः ॥ ७ ॥

राष्ट्रोत्थानं विषयनवनिर्माणमेवं न सौधैः
पाषाणानां भवननिचयैर्नापि संयन्त्रजालैः ।
किन्तु स्यात्सच्चरितविभवैः श्रेष्ठमानुष्यभावै
राष्ट्रप्रीतिप्रचुरहृदयैर्नागरैर्धर्मयुक्तैः ॥ ८ ॥

यस्मै काम्या भवति सकला भौतिकोत्कर्षसिद्धिः
साध्यं योऽभूदखिलसुखसौविध्यसंसाधनानाम् ।
यस्मिन् प्राप्ते ह्यवरगुणतां व्यर्थतामेति सर्वं
तन्निर्माणं कथमिव भवेन्नैव केनाप्यचिन्ति ॥ ९ ॥

वंशोत्कर्षे महिषतुरगश्वानगोकुक्कुटाना-
मन्येषां च प्रवरगुणसंस्कारहेतोस्तिरश्चाम् ।
जात्युत्थाने विहितविविधानेकयत्नैर्मनुष्यै-
श्चित्रं ! कोऽपि प्रवरनरनिर्माणयत्नो न चक्रे ॥ १० ॥

सत्संस्कारैर्मनुजवरनिर्माणकार्यं हि शक्यं
संस्कारैश्च प्रभवतितरां व्यक्तिसत्त्वप्रकाशः ।
शिल्प्युट्टङ्कैः प्रतिकृतिरिव स्थूलपाषाणखण्डाच्
शाणोल्लीढो मणिरिव नरो भाति संस्कारयुक्तः ॥ ११ ॥

तस्मादेव प्रवरमुनिभिर्दूरदृष्ट्या सनाथैः
संस्काराणां मनुजवरनिर्माणकार्ये महत्त्वम् ।
जानद्भिश्चाजननमरणं जीवने मानवीये
संस्काराणां खलु सुविहिता षोडशानां प्रतिष्ठा ॥ १२ ॥

संस्काराणां प्रवरतमकेन्द्राणि सन्दूषितानि
शिक्षा नाम प्रथमतरसंस्कारकेन्द्रं प्रधानम् ।
साहित्याख्यं तदनु चलचित्राख्यकेन्द्रं नभोवाक्
श्रेष्ठं दूरेक्षणमपि च सर्वाणि सन्दूषितानि ॥ १३ ॥

सच्चारित्र्यप्रवरगुणसन्धानदक्षा सुशिक्षा
शालाविद्यालयपरिसराद् बुद्धिपूर्वं निरस्ता ।
शिक्षापाठ्यक्रमपरिहृता नीतिधर्मादिशिक्षा
स्वैराचारप्रवणविनयश्चालितः सर्वदेशे ॥ १४ ॥

लुप्तो धर्मश्चरितपरमा नीतिशिक्षापि लुप्ता
सर्वं पर्यावरणमभितो दूषितं कर्तुमिष्टाः ।
सच्चारित्र्योन्मथनचतुरा दुष्टभावाश्च मुक्ता
नष्टे धर्मे कथमिव भवेन्मानवत्वाभिरक्षा ॥ १५ ॥

राष्ट्रोत्थानं युवकचरितोत्थानसंश्लिष्टमस्ति
सर्वैश्वर्यप्रचुरसुखसौविध्यपूर्णोऽपि देशः ।
चारित्र्योनो भवति ननु चेद् दीनहीनोऽस्ति नूनं
राष्ट्रैश्वर्यं खलु युवजनाः शुद्धचारित्र्यवन्तः ॥ १६ ॥

तस्माद् बुद्धया युवकचरितोत्थानयत्नो विधेयो
नो चेद् व्यर्थं विषयनवनिर्माणकार्यं ह्यशेषम् ।
श्रीमद्राष्ट्रं चरितरहितं स्थातुमेवासमर्थं
चारित्र्यापद् भरतविषये विद्यते भीषणाऽद्य ॥ १७ ॥

१७-१०-८४

## सा खलु धन्या भारतभूमिः

विश्वविधातुः प्राक्तनसृष्टे-
स्तस्य दयादाक्षिण्यसुवृष्टेः ।
स्वर्गनिभाया भूतलसृष्टे-
र्भारतमातुर्गायत गीतम् ॥ १ ॥

मानवजातेर्मोहतमिस्रं
खण्डयतः स्वज्ञानमयूखैः ।
वेदरवेर्मूलोद्भवभूमे-
र्भारतमातुर्गायत गीतम् ॥ २ ॥

उत्तरतः शैलाधिपगुप्तां
दक्षिणतो रत्नाकरपूताम् ।
सिद्धमुनीन्द्रैर्वधितपुण्यां
भारतभूमिं गायत लोकाः ॥ ३ ॥

सर्वसुखाप्तैर्निर्जरवृन्दै-
र्भावितभूतिं कीर्तितकीर्तिम् ।
नन्दितनादां वन्दितपादां
भारतभूमिं गायत लोकाः ॥ ४ ॥

यत्र जनिं सम्प्राप्तुमनोभिः
स्वर्गसुखाब्धौ मग्नसुरौघैः ।
तप्तमतीवं घोरतपस्तां
भारतभूमिं गायत लोकाः ॥ ५ ॥

तुङ्गनगेन्द्राऽऽपादितरक्षां
गाढसमुद्राऽऽधावितपादाम् ।
सिन्धुतरङ्गाऽऽपावितचित्तां
भारतभूमिं गायत लोकाः ॥ ६ ॥

यत्र समुत्थैर्ज्ञानमयूखैः
शास्त्रसमूहालोकतरङ्गैः ।
भासितपूतं विश्वमजस्रं
सा खलु धन्या भारतभूमिः ॥ ७ ॥

यत्र मुनीन्द्रैर्योगसमाधौ
जीवनमृत्योरन्तिमतत्त्वम् ।
हस्ततलस्थार्थोपमदृष्टं
सा खलु धन्या भारतभूमिः ॥ ८ ॥

यत्र मुनीनामाश्रममध्ये
हिंस्रपशूनां शाश्वतवैरम् ।
आत्मिकरागे पूर्णविलीनं
सा खलु धन्या भारतभूमिः ॥ ९ ॥

विश्वगुरोर्या गौरवपूर्णं
लोकललामं स्थानमुदग्रम् ।
मण्डयति स्म प्राक्तनकाले
सा खलु धन्या भारतभूमिः ॥ १० ॥

विश्वमनुष्यधर्मतृषार्त-
यंत्र हि नूनं प्राप्य गृहीता ।
संस्कृतिधर्माचारसुदीक्षा
सा खलु धन्या भारतभूमिः ॥ ११ ॥

मूलर - गेटे - शोपनहावेर्
समंद - लाबी - मन्सुर - दाराः ।
यत्र समापुर्मानसशान्ति
सा खलु धन्या भारतभूमिः ॥ १२ ॥

मानवशान्तिक्षेमविनाशी
भौतिकभूत्याध्यात्मिकभूत्योः ।
दृष्टविरोधो यत्र हि शान्तः
सा खलु धन्या भारतभूमिः ॥ १३ ॥

मानवनिष्ठाध्यात्मविशिष्टा
सर्वजनीना विश्वहितार्था ।
त्यागविशिष्टा भोगविहीना
संस्कृतिरस्या भारतभूमेः ॥ १४ ॥

सर्वसमृद्धा सर्वविशाला
सर्वपुराणी शाश्वतवाणी ।
देवगिरा यत्संस्कृतिकोषः
सा खलु धन्या भारतभूमिः ॥ १५ ॥

भौतिकशास्त्राऽऽध्यात्मिकशास्त्रे
यत्र सखायौ वैरविहीनौ ।
विश्वहितार्थं पूरकभूतौ
सा खलु धन्या भारतभूमिः ॥ १६ ॥

काश्मिरभूमिः प्रोन्नतशीर्षं
टामिलनाडूकेरलपादौ ।
राजपुतानावङ्गसुबाहू
पावनकाशी मानसभूता ॥ १७ ॥

शुभ्रहिमाद्री रौप्यकिरीटः
पावनगङ्गासिन्धुतटिन्यः ।
सन्ति यदीया रक्तधमन्यः
सा खलु धन्या भारत भूमिः ॥ १८ ॥

उन्नतभाला निर्मलशीला
चारुचरित्रा सुन्दरगात्रा ।
प्रोज्ज्वलवर्णा भव्यविशाला
भारत भूमिः सा खलु धन्या ॥ १९ ॥

आदिमनुष्यो यत्र बभूव
यत्र च गीतं ह्यादिमगीतम् ।
ज्ञानमरीचिर्यत्र दिदीपे
सा खलु धन्या भारतभूमिः ॥ २० ॥

आद्यकवीन्द्रैर्यत्र सुगीतं
मानवशान्तेर्वैदिकगीतम् ।
भावरसार्द्रं स्नेहगुणाढ्यं
सा खलु धन्या भारतभूमिः ॥ २१ ॥

त्यागतपःपूतात्ममनोभि–
र्यत्र मुनीन्द्रैरात्मसुपुण्यैः ।
स्वः किल कृष्ट्वा प्रापितमूर्व्यां
सा खलु धन्या भारतभूमिः ॥ २२ ॥

आद्यमुनीन्द्रैः शान्तिसमुद्रै-
र्विश्वहितार्थं यत्र हि तप्ता ।
तीव्रकठोरा घोरतपस्या
सा खलु धन्या भारतभूमिः ॥ २३ ॥

भौतिकभूत्यैश्वर्यसमृद्ध्या
या खलु सौवर्णी चटकेति ।
ख्याततमा त्रैलोक्यविताने
सा खलु धन्या भारतभूमिः ॥ २४ ॥

प्राक्तनकाले या महनीयं
भौतिकभूतेरुन्नतशृङ्गम् ।
प्राप्य न मग्ना दुःखपयोधौ
सा खलु धन्या भारतभूमिः ॥ २५ ॥

तस्य निदानं नैव गवेष्यं
देहसमेतैवात्मविभूतिः ।
लोकमनस्तो नैव निरस्ता
ह्यात्मशरीरे नाम मनुष्यः ॥ २६ ॥

अद्यतनीनो मानवसङ्घो
ह्यात्मविहीनो वित्तमदान्धः ।
केवलदेहासक्तिविमूढः
शान्तिसुखाभ्यां पूर्णवियुक्तः ॥ २७ ॥

यावदिहार्थासक्तमनुष्याः
आत्मवियुक्ता धर्मविहीनाः ।
भोगविलीनाः पापनिलीना-
स्तावदशक्या शान्तिसुखाप्तिः ॥ २८ ॥

अद्यतनीनाः सभ्यमनुष्याः
संस्कृतिधर्माचारविहीनाः ।
कुत्सितपापाचारचरन्तो
लज्जितभीता भान्ति न किञ्चित् ॥ २९ ॥

केवलदेहो नैव मनुष्यः
केवलमात्माऽप्यपि न मर्त्यः ।
तौ खलु युक्तौ नाम मनुष्यो
द्वावपि तस्मात् खल्ववधेयौ ॥ ३० ॥

आत्मवियुक्ता भौतिकभूति–
र्मानवदुःखाशान्तिप्रसूतिः ।
आत्मिकसिद्धिर्मानवसाध्यं
भौतिकसिद्धिः साधनरूपा ॥ ३१ ॥

विश्वविधातुः सृष्टिविधाने
तत्त्वयुगं तद्भाति च सत्यम् ।
आत्मिकमेकं भौतिकमन्यं
चेतनमेकं चान्यमचेतः ॥ ३२ ॥

एकममूर्तं मूर्तमिहान्यच्
चिन्मयतत्त्वं नूनममूर्तम् ।
भौतिकतत्त्वं भाति च मूर्तं
साध्यमिहैकं साधनमन्यत् ॥ ३३ ॥

सुन्दरभूषाभूषितदेहः
स्नानविलेपाकर्षकरूपः ।
रम्यमनोज्ञो भाति च तावद्
यावदिहास्ति स्वात्मसमेतः ॥ ३४ ॥

आत्मनि याति त्वन्यमुहूर्ते
भीषणघोरो भाति स देहः ।
पूतिसमेतः कुत्सितरूपः
सत्वरखेयस्तत्क्षणदाह्यः ।। ३५ ।।

अस्य महत्त्वं शोभनरूप-
मात्ममहात्म्यात्केवलमात्रम् ।
साधनरूपं व्यक्तमतोऽस्य
चिन्मयरूपाध्यात्मविभूतेः ।। ३६ ।।

साधनसाध्ये व्यस्ततयाऽऽत्ते
मानवजातेर्दुःखनिदानम् ।
शान्तिसमीहैर्मर्त्यसमूहै-
र्भव्यमतस्तैरात्मनिविष्टैः ।। ३७ ।।

१२-३-८५



# जीवेच्चिरं भारतलोकराज्यम्

वर्षाणि पञ्च त्रिगुणानि तस्य
जातस्य जातानि हि केवलानि ।
तथापि सर्वाधिककीर्तिशालि
जीवेच्चिरं भारतलोकराज्यम् ॥ १ ॥

यदा प्रभृत्येव विमुक्तभूतं
तदाप्रभृत्याहितनित्ययत्नम् ।
स्वाधीनताहीनजनस्य मुक्त्यै
जीवेच्चिरं भारतलोकराज्यम् ॥ २ ॥

लोकं विधास्यन्निव वीतशोकं
दोधूयते मानयुतो यदीयः ।
अशोकचक्राङ्कितराष्ट्रकेतु-
र्जीवेच्चिरं भारतलोकराज्यम् ॥ ३ ॥

गान्धिर्महात्मा महनीयकीर्ति-
र्विनाऽपि शस्त्रं जितवीरशत्रुः ।
विशोभते राष्ट्रपिता यदीयो
जीवेच्चिरं भारतलोकराज्यम् ॥ ४ ॥

अलोकसामान्यविशालदृष्टि-
र्विश्वस्य शान्त्याततभूरियत्नः ।
जवाहरो यस्य विदग्धशिल्पी
जीवेच्चिरंच भारतलोकराज्यम् ॥ ५ ॥

शास्त्रेषु निर्बाधगतिर्मनीषी
श्रीसर्वपल्लिस्स दिगन्तकीर्तिः ।
यद्राजते राष्ट्रपतिर्विशिष्टो
जीवेच्चिरं भारतलोकराज्यम् ॥ ६ ॥

लघ्वाकृतिः सन्नपि दीर्घकीर्ति–
रुत्तेजनायामपि शान्तमूर्तिः ।
यच्छास्त्रिवर्योऽस्ति महाधुरीणो
जीवेच्चिरं भारतलोकराज्यम् ॥ ७ ॥

अनामयं यस्य सदा वितन्वन्
नगाधिपस्तिष्ठति दत्तचित्तः ।
तथैव धावंश्चरणौ समुद्रो
जीवेच्चिरं भारतलोकराज्यम् ॥ ८ ॥

भागीरथीपुण्यजलाभिषिक्तं
देवाङ्गनागीतयशःप्रगाथम् ।
असंख्यदेवर्षिसमिद्धतेजो
जीवेच्चिरं भारतलोकराज्यम् ॥ ९ ॥

विश्वस्य साङ्ग्रामिकसङ्घमुक्ता
तटस्थवैदेशिकराजनीतिः ।
संसारसौख्याय बभूव यस्य
जीवेच्चिरं भारतलोकराज्यम् ॥ १० ॥

स्वातन्त्र्यसौभ्रात्रसमानताख्यां
त्रयीमुदारां बहुमन्यमानम् ।
त्रैलोक्यकल्याणनिबद्धभावं
जीवेच्चिरं भारतलोकराज्यम् ॥ ११ ॥

लोकस्य लोकाय च लोकचाल्यं
लोकोन्मुखं लोकहितानुबन्धि ।
इत्युच्चलक्ष्येण कृतप्रयाणं
जीवेच्चिरं भारतलोकराज्यम् ॥ १२ ॥

आशाङ्कुरो मानवसभ्यतायाः
सद्वत्सलं दीनजनार्तिहारि ।
बद्धादरं बद्धजनस्य मुक्त्यै
जीवेच्चिरं भारतलोकराज्यम् ॥ १३ ॥

अगणितरणवीरैः स्वासुभिर्दत्तहव्यं
प्रथितविमलकीर्ति श्रीमदौदार्यशालि ।
सुरगणमुनिवृन्दैराशिराशिकृताढ्यं
जयतु जयतु राज्यं भारतीयं विलालम् ॥ १४ ॥

१-१-६५



# तावत्स्वराज्यं नहि लोकराज्यम्

यावत्स्वकीया निजदेशभाषाः
प्रतिष्ठिता नैव भवन्ति लोके ।
विद्यालयन्यायगृहापणेषु
तावत्स्वराज्यं नहि लोकराज्यं ।। १ ।।

राष्ट्रस्य भव्योन्नतभालपट्टे
कलङ्करेखेव विराजमाना ।
आङ्ग्ली न यावन्निलयं प्रयाति
तावत्स्वराज्यं नहि लोकराज्यम् ।। २ ।।

अस्मद्वरिष्ठार्रसुसंस्कृतेर्या
संवाहिका संस्कृतदेववाणी ।
यावन्न मानार्हपदं प्रपन्ना
तावत्स्वराज्यं नहि लोकराज्यम् ।। ३ ।।

* रुद्रप्रसूर्या दुहिता वसूनां-
मादित्यजामिर्ह्यमृतस्य नाभिः ।
अघ्न्येति वेदैरभिगीयमाना
सर्वत्र देशे परिपूज्यमाना ।। ४ ।।

मातेव दुग्धामृतपोषयित्री
दध्याज्यतक्रार्पणतोषयित्री ।
राष्ट्रीयमानोन्नतचिन्हभूता
दृढार्थतन्त्रस्य कशेरुभूता ।। ५ ।।

---

* ऋग्वेद ८-१०८-१५

प्राचीनभव्योज्ज्वलसभ्यतायां
विवर्तनेषु भ्रमिकीलभूता ।
यावच्च गौर्हन्यत आर्यदेशे
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ६ ॥

यावज्जना नैव भवन्ति सुस्थाः
प्रसन्नचित्ताः सुखशान्तियुक्ताः ।
खाद्यान्नपानेन च पूर्णतृप्ताः
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ७ ॥

यावत्समस्ता न जनाः सुविद्याः
सुधार्मिका धैर्यधनाः सुवृत्ताः ।
विवेकवन्तोऽपि च राष्ट्रभक्ताः
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ८ ॥

स्वदेशधीदास्यनिदानभूता
प्रतीच्यवर्त्मानुविधायिशिक्षा ।
यावद्यथार्थं न भवेत्स्वतन्त्रा
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ९ ॥

लोकाय लोकस्य च लोकचाल्यं
लोकैककल्याणधिया प्रवृत्तम् ।
आसेतु यावन्न भवेत्सुराज्यं
तावत्स्वराज्यं नहि लोकराज्यम् ॥ १० ॥

खाद्यान्ननिर्माणविधौ स्वकीये
रक्षाविधावायुधनिर्मितौ च ।
यावत्स्वदेशोऽस्ति परावलम्बी
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ११ ॥

यावन्न राष्ट्रं निजवीर्यगुप्तं
बाह्यान्तरद्वेष्टृसमूहरिक्तम् ।
चीनैश्च पाकैश्च भवत्यधृष्यं
तावत्स्वराज्यं नहि लोकराज्यम् ॥ १२ ॥

२१-८-८६

# धन्यो धन्यः कालिदासः कवीन्द्रः

भास्वद्रत्नं प्रगुणसदसो विक्रमादित्यशास्तु–
र्नक्षत्रं च प्रखरतमभा विश्वकाव्याम्बरस्य ।
मूर्तो नूनं व्यरचि विधिना मानदण्डः कवीनां
धन्यो धन्यः कविकुलगुरुः कालिदासः कवीन्द्रः ॥ १ ॥

कालेऽतीते द्विगुणितसहस्राब्दकल्पेऽपि तस्य
कीर्तिज्योत्स्ना स्फटिकधवला व्याप्य विश्वं विभाति ।
द्यावाभूमी प्रखरकिरणस्यात्मदीप्तिर्यथेयं
सर्वा आशा पवननुदितामोदगन्धो यथा वा ॥ २ ॥

धन्यं चक्रेऽकलुषजनुषा कं स देशं कवीशः
कौ वाऽभूतां सुभगपितरौ भाग्यशाली गुरुर्वा ।
कुत्रावात्सीद् भ्रमणमकरोत्कुत्र कुत्रेति सर्वं
कष्टं! कष्टं! निबिडतमसा छन्नमस्त्यद्य यावत् ॥ ३ ॥

आत्माविष्टं विटपिविटपं खण्डयन् मूलतोऽज्ञः
प्रत्यादिष्टस्तदनु विदुषीशेखरीभूतपत्न्या ।
देव्याः काल्याः परमकृपया लब्धविद्यः किलेति
प्राप्नोदाख्यां कविकुलगुरुः कालिदास स एवम् ॥ ४ ॥

नानारूपाः प्रचलिततमाः सन्ति गाथास्तदीया
आसीत्सौम्यः प्रियतमसुहृत् सिंहलद्वीपशास्तुः ।
द्वीपं गत्वा वसतिमकरोत्तं दिदृक्षुः स वेशे
तत्रैवाप्नोन्मरणमनघो लुब्धवाराङ्गणायाः ॥ ५ ॥

अन्या काचित्प्रथयतितरां भोजराजस्य मित्रं
रत्नं चैव प्रथितसदसः तस्य बाणादिभिस्तम् ।
सर्वा एता रुचिरमधुराः केवलाः सन्ति गाथाः
सत्यापेता जनकुतुकजा लब्धवर्णाः कथञ्चित् ॥ ६ ॥

इत्थं दूरं विनयविनतः ख्यातिलोभात्स आसीत्
दूरं तावच्चरितकथनं सातिविस्तारपूर्वम् ।
नामोल्लेखादिकमपि न यः कर्तुकामो बभूव
सत्यं विद्या विनयमधुरा दुर्लभा मर्त्यलोके ॥ ७ ॥

एवं भूते भवति चरितं तर्कगम्यं तदीयं
यस्मादास्थां निरतिशयितां दर्शयत्युज्जयिन्याम् ।
सस्निग्धं च स्फुरितरुचिरां स्तौति शोभां तदीयां
तस्मादूह्यं वसतिमकरोदुज्जयिन्यां स दीर्घम् ॥ ८ ॥

नाटचे पात्रं यदयमकरोन्नातिवित्ताग्निमित्रं
सामान्यास्तच्चरितघटना यत्स चित्रीकरोति ।
भाषाशैलीं सरससरलां यच्च काव्ये प्रयुङ्क्ते
तस्मात्तर्को भवति बलवान् ख्रिस्तपूर्वं स जातः ॥ ९ ॥

बौद्धाचार्यः प्रथमशतके वर्तमानोऽश्वघोषो
वैदर्भीं तत्सुभगसरणीं सन्निवेशांश्च कांश्चित्
काव्ये यत्सोऽनुसरति निजे भावलालित्यपूर्णे
नूनं जातः कविकुलगुरुः ख्रिस्तपूर्वं स तस्मात् ॥ १० ॥

ध्वन्यायत्तः सहजमधुरः कल्पनायां विलासो
ह्यौचित्यात्तो नवरसगुणालङ्कृतीनां प्रयोगः ।
अर्थव्यक्तिर्मधुमयपदश्रेणिरम्या च शय्या
सत्काव्ये यो लसति महिमा विद्यतेऽलं तदीये ॥ ११ ॥

द्राक्षापाकः सरसमधुरः पूर्णकुम्भस्सुधायाः
सान्द्रो लेपो मलयजरसस्यात्मशान्तिप्रदाता ।
वापी पूर्णाऽप्रतिममधुनः किन्नु कोषस्सुखस्य
काव्यं तस्याप्रतिमरूचिरं नैव शक्यं प्रवक्तुम् ॥ १२ ॥

सत्याहिंसाशमदमतपस्त्यागनिष्ठा वरिष्ठा
विश्वक्षेमावहननिरता मानवीया ह्युदारा ।
दिव्योदात्ता निगमगदिता विश्ववन्द्याऽभिनन्द्या
सङ्क्रान्ता तत्सुकृतिमुकुरे संस्कृतिर्भारतीया ॥ १३ ॥

१०-१२-१९६६

# धन्यो धन्यः श्रीदयानन्दवर्यः

मौर्वीराज्ये भुवनविदिते काठियावाडदेशे
टङ्काराख्ये निवसथवरे लब्धवान् कोऽपि जन्म ।
चत्वारिंशेऽधिकशततमे हायने पूर्वमस्माद्
विख्यातो यो भवति भुवने श्रीदयानन्दनाम्ना ॥ १ ॥

मूर्त्यारूढं खनकनिवहं को न पूर्वं ददर्श
शैव्या रात्र्या व्रतमपि न कस्तस्य पूर्वं चकार ।
किन्तूद्भूता हृदयजलधौ भावभङ्गिस्तदीये
यत्त्रातुं स्वं प्रभवति न यो मूषिकात्किं स ईशः ॥ २ ॥

दृष्ट्वा कालाकवलिततनुं बाल्यकाले स्वसारं
मृत्युग्रस्तं तदनु दयितं कालपूर्वं पितृव्यम् ।
शोकाधिक्यादभवदनघो गाढध्याने निमग्नः
कोऽयं मृत्युर्भवति च कथं मानवो मृत्युमुक्तः ॥ ३ ॥

वैराग्यात्तं विरतमनसं कर्तुकामेन पित्रा
छित्त्वा पाशानुपयमसमान् बुद्धिपूर्वं प्रयुक्तान् ।
निश्चक्राम प्रियपितृगृहादक्षयत्वं विचिन्वन्
को रोद्धुं तं प्रभवति जनं यो हि मोक्षाभिलाषी ॥ ४ ॥

उत्तुङ्गाद्रिप्रतिभयवनह्रादिनीर्लङ्घयित्वा
दृष्ट्वा तांस्तान् प्रथितविदुषो योगलब्धप्रतिष्ठान् ।
तृप्तिं नाप्तः कथमपि तु तैरर्थकामाभिसक्तैः
प्रत्यागच्छत्प्रयतविरजानन्दयोगीश्वरौकः ॥ ५ ॥

तत्सत्तीर्थान्निखिलनिगमज्ञानपीयूषपूर्णा
मायामोहकलितविधुरामुद्धरिष्यंस्त्रिलोकीम् ।
स्वान्ते पूर्णः परमकृपया चण्डरश्मिर्यथाऽसौ
स्थाने स्थाने भ्रमणमकरोद् ध्वान्तजालं विभिन्दन् ॥ ६ ॥

लुप्तान् वेदानुदधरदसौ ब्रह्मचर्यं शशास
पाखण्डानां दलनमकरोत्सत्यभक्ति दिदेश ।
प्रत्याचख्यौ मृतनिवपनं मूर्तिपूजां प्रमाणैः
सद्विद्यानां वितरणपरे तीर्थबुद्धि बबन्ध ॥ ७ ॥

शूद्रादिभ्यो निगमपठनस्याधिकारं प्रदाय
कालाद्दीर्घाद्दलितजनतां बन्धमुक्तां व्यतानीत् ।
रक्षन्नारीं परमकृपया दास्यमग्नां युगेभ्यो
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ ८ ॥

पुण्ये कार्ये हवनसदृशे लोकलोकान्तराप्ये
मूढैर्लोकैर्निगमवचसा प्राणिनां कल्प्यमानाम् ।
क्रूरां हिंसामुपहितबलैः खण्डयन् स प्रमाणै-
र्धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ ९ ॥

लुप्तार्थानां प्रकटनपरान् भाष्यवर्यान् प्रणीय
वेदालोकात्परमपुरुषज्ञानविज्ञानभूतात् ।
बह्वोः कालाद्विमुखजगतीं सम्मुखीं संविधाता
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ १० ॥

विश्वात्मानं भुवनजनकं सच्चिदानन्दरूपं
हित्वा देवं जननरहितं निर्विकारं विदेहम् ।
अर्चन्मूर्तीर्भ्रमितभुवनं शिक्षयन्नीशभक्ति
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ ११ ॥

जन्मस्थानं गुणकृतिपरां वर्णरीतिं प्रचाल्य
मर्यादां तां पुनरपि शुभां चाश्रमाणां प्रवर्त्य
कायाकल्पं सकलजगत साधयिष्यन् महात्मा
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ १२ ॥

नानारूपं कुटिलमतिभिर्मोह्यदीयैस्तथाऽऽङ्ग्लै-
र्मूढान् हिन्दूञ् छलबलयुतं हापयित्वा स्वधर्मात् ।
पादाक्रान्तां प्रियनिजभुवं मोचयन्नात्मशक्त्या
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ १३ ॥

अन्धीभूतान् स्वविषयजनान् ज्ञानविज्ञानभासा
पाश्चात्यानां प्रतिहतदृशो गौरवं स्वं प्रदर्श्य ।
कुर्वन् युक्तान् ज्वलननिभया देशभक्त्या स्वबन्धून्
धन्यो धन्यः खलु यतिवरः श्रीदयानन्दवर्यः ॥ १४ ॥

पूर्वं दृष्टाः कति न मुनयो ज्ञानविज्ञानयुक्ता
ब्रह्मज्ञाने निरतमनसो विश्वकल्याणकामाः ।
साम्यं तेषां वहति न तु कोऽप्यद्वितीयस्य तस्य
घोरं दात्रे विषमपि मुनेर्दायकस्यामृतस्य ॥ १५ ॥

सत्यार्थानां प्रवचनपटुं ग्रन्थराजं प्रणिन्ये
संस्थामेकां शुभगुणवतां स्थापयामास धन्यः ।
आनन्दानां विमलसरितां वाहयित्वा च भूमौ
क्षेमं तन्वन् खलु विजयते श्रीदयानन्दवर्यः ॥ १६ ॥

११-५-६४

# गान्धिजन्मदिननिमित्तेन

प्राप्तं स्वराज्यं न तु रामराज्यं
मुक्तः स्वदेशो न तु देशपाशः ।
यातः फिरङ्गी न फिरङ्गिरीति-
रुत्सृष्टनिर्मोकमहिर्हि याति ॥ १ ॥

वर्षाणि सप्त त्रिगुणान्यभूवन्
देशस्य मुक्तस्य विदेशपाशात् ।
तथापि लोको न सुखी बभूव
दारिद्र्यदुःखं न लघूबभूव ॥ २ ॥

स्वप्नं महात्मा द ृशे सुखं यं
स विद्यते स्वप्न इवाद्ययावत् ।
पूर्तिस्त्वशक्या प्रतिभाति तस्य
विलोक्य पातं जनजीवनस्य ॥ ३ ॥

आवासहट्टापणवीथिकासु
विद्यालयन्यायसभागृहेषु ।
जनाः प्रयुञ्ज्युर्न विदेशभाषा-
मित्युच्चरावं स जगौ महात्मा ॥ ४ ॥

हिन्दी भवेद्राष्ट्रगिराऽविलम्बं
चलेच्च तस्यां व्यवहारजातम् ।
भवेत्स्वकीया निजवेषभूषा
स्वातन्त्र्यसम्माननिदर्शिका सा ॥ ५ ॥

स्वराष्ट्रमानोन्नतचिह्नभूता
स्थिरार्थतन्त्रस्य च हेतुभूता ।
मातेव सर्वत्र विभाव्यमाना
वध्या न गौः स्यान्निजपुण्यदेशे ॥ ६ ॥

सत्कार्यसम्पादनमात्रशीलाः
परार्थनक्तंदिनसोढक्लेशाः ।
धर्मार्थबुद्ध्या कृतकार्यजाता
आचारपूताश्च भवन्तु लोकाः ॥ ७ ॥

उत्कोचरिक्तं जनकार्यरक्तं
सत्पक्षपाति द्रुतकार्यशीलम् ।
सद्धेतुमूलं च विशुद्धदोषं
सदा भवेच्छासनमार्तत्राणम् ॥ ८ ॥

स्वातन्त्र्यमेतत्किल राजकीयं
साध्यं न बोध्यं खलु साधनं तत् ।
देशस्यवित्तीयसमर्थतायाः
समाजसम्बन्धिविकासितायाः ॥ ९ ॥

अभिन्नरूपं करणाद्धि कार्य-
मतो क्षमः साधयितुं न जन्तुः ।
विशुद्धकार्यं करणादशुद्धा-
दित्थं महात्मा निजगाद तत्त्वम् ॥ १० ॥

धर्माविरुद्धां नृपनीतिमिष्टां
मेने स कल्याणकरीं जनस्य ।
अतो महान्तं स ततान यत्नं
कर्तुं नयं तं छलपङ्कमुक्तम् ॥ ११ ॥

यन्त्रस्य दासो न भवेन्मनुष्यो
धियाऽनयैव व्यरुणत्स यन्त्रम् ।
याते नरे यन्त्रभुजिष्यभाव-
मात्मैव तस्याशु विनाशमेति ॥ १२ ॥

कामं ह्यहिंसां बहुमन्यते स्म
नासीत्तु सा भीरुजनानुपाल्या ।
पलायनाच्छ्रेष्ठतरं हि मेने
हिंसामयं वैरिविरोधनं सः ॥ १३ ॥

विपन्नसम्पन्नसमूहमध्ये
भयङ्करं वर्गविघट्टनं ये ।
प्रचार्य निर्मातुमशान्तिमैच्छ-
न्नुपादिशद् वर्गसमन्वयं तान् ॥ १४ ॥

ऐश्वर्यमत्यां निजराजधान्या-
ममात्यवर्याग्र्यगृहान्तरेषु ।
धनाढ्यहर्म्येषु च रुद्धप्रायं
स्वातन्त्र्यगङ्गाविमलप्रवाहम् ॥ १५ ॥

दरिद्रनारायणवेश्मद्वारं
प्रतिप्रवाह्याथ विधातुमैच्छत् ।
स्वाधीनतामर्थवतीमिमां नः
सर्वैर्हि भोग्यं किल रामराज्यम् ॥ १६ ॥

कियन्तो नो जाताः सुजनमणयो भारतभुवि
कियद्भिर्नाधारि व्यथितजनसेवाव्रतमिह ।
परं श्रीगान्धीनामभवदतुलः कोऽपि महिमा
ह्यभूद् यस्मादस्मत्प्रियभरतभूर्दास्यरहिता ॥ १७ ॥

१-८-६८

# जवाहरवर्धापनम्

संसारशान्तिपरिरक्षणमात्रचिन्तः
स्वातन्त्र्ययज्ञहुतजीवनसर्वसौख्यः ।
विद्योतमान इव भारतकण्ठहारो
जीवेच्चिरं बत जवाहरलालधीरः ॥ १ ॥

पुत्रोऽपि सन् धनवतो जनकस्य धीमान्
संलालितोऽपि नृपवन्मृदुलोपचारैः ।
कृत्स्नं त्यजन् भरतराष्ट्रविमुक्तिहेतो-
र्वन्द्यो न कस्य मनुजस्य जवाहरोऽसौ ॥ २ ॥

हेरौ तथा प्रथितकेम्ब्रिजबोधपीठे
विद्यार्जनं कृतवतोऽपि विपश्चितोऽपि ।
मानुष्यकेण सुलभा न बभूव काऽपि
वित्तार्जनस्य च सुखस्य च तस्य वाञ्छा ॥ ३ ॥

रावीतटे मिलितराष्ट्रसभाधुरीणो
ह्युद्घोषको भरतवर्षसमग्रमुक्तेः ।
साम्राज्यवादिपरशासनचन्द्रराहु-
र्जीवेच्चिरं बत जवाहरलालधीरः ॥ ४ ॥

बाण्डुङ्गसंसदि विघोषितपञ्चशीलो
हिन्देशियादिलघुराष्ट्रविमोचनार्थम् ।
नक्तंदिवं सततभूरिकृतप्रयासो
भूयाज्जवाहरसुधीः शतवर्षजीवी ॥ ५ ॥

आफ्रोशियागतनवोदितराष्ट्रनेता
भूमण्डलेऽपि सकले विहितादरोऽसौ ।
सन्तप्तमानवसुखस्य नवप्ररोहो
जीवेंच्चिरं बत जवाहरलालधीरः ॥ ६ ॥

शिष्योत्तमो भवति यत्स महात्मगान्धे-
स्तस्यावदाततमतत्त्वविसर्पणाय ।
उज्जृम्भयन् विमलयत्नवरानजस्रं
जीवेच्चिरं खलु जवाहरलालरत्नम् ॥ ७ ॥

आङ्ग्लाधिराज्यखलशासनदुष्टनीतिं
जातीयवैरविरहं प्रतियुध्यमानः ।
बन्दीकृतोऽपि बहुशो ब्रिटिशैः स तेषां
प्राप्ते स्वराज्यसुफले तु बभूव मित्रम् ॥ ८ ॥

आदर्शराजनयविध्दुरि कीर्तनीयो
मानुष्यनिष्ठमहनीयगुणाकरोऽसौ ।
कर्ता सुविश्रुतकृतित्रितयस्य धन्यो
भूयाज्जवाहरसुधीः शतवर्षजीवी ॥ ९ ॥

वक्ता बृहस्पतिसमो वरदो यथेशो
नेता षडाननसमो महनीयकीर्तिः ।
स्रष्टा चतुर्मुखनिभश्चतुरस्त्रविद्वान्
जीवेच्चिरं बत जवाहरलालधीमान् ॥ १० ॥

विज्ञानमूढजगतः सुपथोपदेष्टा
गम्भीरधीरधिषणः करुणार्द्रचेताः ।
मानुष्यसिक्तहृदयः शमशान्तिवीरो
जीवेच्चिरं हर ! जवाहरलालधीरः ॥ ११ ॥

चीनासुराय वरदानमसौ प्रदाय
जातोऽपि दुःखविधुरः स यथा महेशः
निर्भिन्नशत्रुकपटं पुनरुद्गतोऽयं
भायाच्चिरं हर ! जवाहरलालभास्वान् ॥ १२ ॥

१०-१०-१९६३

---

## सातवलेकराभिनन्दनम्

वेदोक्तविद्योज्ज्वलबोधराशिं
स्वापूर्वपाण्डित्यपरिश्रमेण ।
सामान्यलोकाय समर्पयन् स
जीवेच्चिरं सातवलेकरार्यः ॥ १ ॥

वेदाय वेदेन च वेदहेतोः
श्वसन् वसन् पक्ष्मनिमीलयंश्च ।
वेदार्थमाहारविहारकुर्वन्
जीवेच्चिरं वेदमयो महात्मा ॥ २ ॥

जीवेम भूयः शरदः शताद् वै
सुप्रार्थनां वेदगतामितीमाम् ।
सत्यापयन्नव्यमुनिप्रकाण्डो
जीवेच्चिरं सातवलेकरार्यः ॥ ३ ॥

वेदादिसच्छास्त्रमहोदधीना-
माजीवनं चाविगणय्य कष्टम् ।
आलोडनेनार्जितदीर्घकीर्ति-
र्जीवेच्चिरं सातवलेकरार्यः ॥ ४ ॥

अनेकविद्यास्थलधर्मपीठैः
संस्थान्तरैर्मानपदैः प्रशस्तम् ।
प्राचीनदेवर्षिनवावतारं
नमाम्यहं सातवलेकरार्यम् ॥ ५ ॥

सावन्तवाडीगतकोलग्रामे
विद्याप्रिये निर्धनविप्रवंशे ।
जातो महाराष्ट्रमिति प्रसिद्धे
प्रान्ते सुधन्यः शतवर्षपूर्वम् ॥ ६ ॥

सामान्यशालाविनयं समाप्य
जगाम जेजेऽभिधचित्रशालाम् ।
आलेख्यविद्याध्ययनं विधाय
बभूव सत्कीर्तितचित्रकारः ॥ ७ ॥

स्वातन्त्र्ययुद्धे परितः प्रवृत्ते
विजृम्भमाणे रणवाद्यघोषे ।
प्रक्षिप्य सिद्धां वरवर्णिकां तां
जग्राह दिव्योज्ज्वललेखनीं सः ॥ ८ ॥

" आर्यः कदाचिन्नहि दीनवृत्ति– "
रित्यार्यचाणक्यवचो निशम्य ।
स्वातन्त्र्यनादं तिलकात्तथैव
स्वातन्त्र्ययुद्धाध्वरदीक्षितोऽभूत् ॥ ९ ॥

" ऊर्जस्वलं वैदिकराष्ट्रगीत– "
मित्याख्यतेजस्वितदीयग्रन्थः ।
रुद्धस्तदानींतनशासनेन
निर्वासितश्चैव स भाग्यपुर्याः ॥ १० ॥

तेजस्विराष्ट्रीयविचारवन्ति
श्रुत्वा तदीयोज्ज्वलभाषणानि
ग्रन्थांश्च लेखांश्च निभाल्य तस्य
बभूवुराङ्ग्ला भयभीतचित्ताः ।। ११ ।।

ततो दयानन्दमुनिप्रभावात्
प्रभावितश्चार्यसमाजसंस्था- ।
क्षेत्रे प्रविष्ठो महनीय कीर्ति-
र्वेदोपदेष्टा समभूद्वरिष्ठः ।। १२ ।।

कांग्रीस्थविद्यालयवेदपीठे
प्राचार्यपीठं परिमण्डयन् सः ।
तेजस्विता वैदिकप्रार्थनाया
इत्याख्यलेखं स लिलेख तीव्रम् ।। १३ ।।

तेनांग्लभूपैः कुपितैर्निरुद्ध
आनीय कोल्हापुरनामपुर्याम् ।
सार्धाब्दकारागृहवासदण्डं
निर्णीय तत्रैव निरोधितश्च ।। १४ ।।

प्राप्य लाहोरपुरं विमुक्तः
संस्थाप्य तत्रैव च चित्रशालाम् ।
राष्ट्रीयसञ्जागरकार्यशङ्खं
कायेन वाचा मनसा स दध्मौ ।। १५ ।।

प्राचीनवेदादिकशास्त्रशोधं
कर्तुं स औन्धाधिपराजधान्याम् ।
अतिष्ठिपन्मण्डलमेकमार्यः
पूर्वं हि पञ्चाशतिवत्सराणाम् ।। १६ ।।

तत्रैव तेन श्रुतिसंहितानाम्–
मत्यल्पमूल्यान् स्वरशास्त्रशुद्धान् ।
सुसुन्दरान् सर्वगुणैः सुपूर्णान्
ग्रन्थान् प्रकाश्योपकृतं नितान्तम् ॥ १७ ॥

वैयासिकीभारतसंहितायाः
तथाऽऽदिकाव्यस्य समूलवन्ति ।
विशुद्धभाषान्तरपुस्तकानि
लोकैकलभ्यानि कृतानि तेन ॥ १८ ॥

आध्यात्मिकं भौतिकदैविकं च
वेदस्य त्रैविध्ययुतं सुभाष्यम् ।
श्रीमद्दयानन्दमुनिप्रदिष्ट–
शैल्यानुसारं स चकार हिन्द्याम् ॥ १९ ॥

यज्ञाध्वरे कल्पितहिंसनस्य
वेदे पवित्रे परमेशबोधे
लेशोऽपि नास्तीत्युपपत्तिजालैः
संसाधयामास सुधन्यधन्यः ॥ २० ॥

गीताविशुद्धार्थविमर्शहेतोः
प्रमाणसातत्यसुतर्कयुक्तम् ।
प्रकाण्डपाण्डित्यविलासशोभि
विशालभाष्यं स चकार हिन्द्याम् ॥ २१ ॥

ग्रन्थान्तरब्राह्मणसंज्ञितानां
भाष्यं तथैवोपनिषद्वराणाम् ।
नैकासु भाषासु करोति धन्यः
सम्पादयत्येव सुपत्रिकाश्च ॥ २२ ॥

कृत्वा चतुर्विंशतिभागयुक्तां
सुखागमां संस्कृतपाठमालाम्
संचाल्य नैकाः सुगमाः परीक्षाः
सेवानिमग्नोऽस्ति स देववाण्याः ॥ २३ ॥

गान्धीवधोर्ध्वं कलहे प्रवृत्ते
विवेकविश्रान्तविमूढचित्तैः ।
जात्यन्धलोकैश्च विनाशितः स
तस्यापि निष्पापमुनेर्निवासः ॥ २४ ॥

अव्याहतस्तेन तथापि धीरः
स्थानान्तरं गुर्जरभूप्रदेशे ।
गत्वा पुनः पारडिनामधेयं
प्रवर्तयामास सुदर्शनं तत् ॥ २५ ॥

षष्टचब्दमात्रे समये स्वकीये
चतुःशतं ग्रन्थवरान् प्रणीय ।
उत्थापयन् वैदिकशोधशैलं
दामोदरो नूनमभूद् द्वितीयः ॥ २६ ॥

गृहे गृहे वैदिकमन्त्रघोषो
यावन्न गुञ्जेन्निजपूतदेशे ।
तावत् कदाचिन्नहि सम्भवेद्वै
सभाजनं देवमुनेर्यथार्थम् ॥ २७ ॥



# ब्रह्ममहर्षेर्गायत गीतम्

भास्वरभव्योदात्तविशालां
जीवनगाथां ध्यायत लोकाः ।
देवदयानन्दर्षिवरस्य
गौरवगीतं गायत लोकाः ॥ १ ॥

विश्वविभूत्यै लोकसुखार्थं
स्वात्मरतिं दिव्योत्कटसौख्यम् ।
अर्पयतस्तद्देवमहर्षे-
र्गौरवगीतं गायत लोकाः ॥ २ ॥

वेदसमुद्धारार्पितजाते-
र्वैदिकधर्मोत्थानरतस्य ।
देवदयानन्दर्षिवरस्य
गौरवगीतं गायत लोकाः ॥ ३ ॥

स्नेहदयाकारुण्यपयोधेः
शान्तितितिक्षाधैर्यहिमाद्रेः ।
अद्भुतमेधातर्कमहर्षे-
र्गौरवगीतं गायत लोकाः ॥ ४ ॥

पीडितशूद्रान् विस्मृतवेदान्
वञ्चितनारीर्दुस्थितधेनूः ।
उद्धरतस्तन्मौनिवरस्य
गौरवगीतं गायत लोकाः ॥ ५ ॥

लोकललामं लोकविशिष्टं
भारतभूभव्योज्ज्वलवृत्तम् ।
स्मारयतस्तद्देवमहर्षे-
गौरवगीतं गायत लोकाः ॥ ६ ॥

मानवमुक्त्यै विश्वहितार्थं
क्ष्वेडमभीक्ष्णं भीषणघोरम् ।
पीतवतो रुद्रातिशायिनो
गौरवगीतं गायत लोकाः ॥ ७ ॥

प्रस्तरपूजाभ्रान्तमनुष्यान्
विश्वविधातुर्वास्तवपूजाम् ।
सन्दिशतस्तद्देवमहर्षे-
गौरवगीतं गायत लोकाः ॥ ८ ॥

यज्ञमखाख्ये धार्मिककार्ये
मूकपशूनां निष्ठुरहिंसाम् ।
वारयतस्तद्देवदयालो-
गौरवगीतं गायत लोकाः ॥ ९ ॥

जीवितपित्रोर्भक्तिसपर्यां
श्राद्धमुदात्तं ख्यापयतस्तद्-
देवदयानन्दर्षिवरस्य
गौरवगीतं गायत लोकाः ॥ १० ॥

सिन्धुनदीवापीरवधूय
शिक्षकपित्राचार्यवरेण्यान्
पावनतीर्थं ज्ञापयतस्तद्-
ब्रह्ममहर्षेर्गायत गीतम् ॥ ११ ॥

केवलजन्माधिष्ठितवर्णा-
नागमयुक्त्यैतिह्यविरुद्धान् ।
डिण्डिमघोषं घोषयतस्तद्-
देवमहर्षेर्गायत गीतम् ॥ १२ ॥

भौतिकभूत्याऽऽध्यात्मविभूतिं
मानवसर्वाङ्गीणविभूतिम् ।
साधयतस्तद्देवमहर्षे-
र्गौरवगीतं गायत लोकाः ॥ १३ ॥

सायण - मूलेरुव्वट - राथै-
र्दिक्षु विकीर्णं वैदिकध्वान्तम् ।
खण्डयतः स्वप्रातिभपादै-
र्वैदिकभानोर्गायत गीतम् ॥ १४ ॥

वैदिकधर्मोन्मुक्तसमीरं
चालनहेतोर्भूप्रतिकोणम् ।
स्थापयतस्तस्यार्यसमाजं
गौरवगीतं गायत लोकाः ॥ १५ ॥

मुस्लिमख्रिस्तोद्भावितनिन्द्यं
संस्कृतिधर्मोत्पाटनकूटम् ।
स्वोद्भटमत्योत्सादकमौने-
र्गौरवगीतं गायत लोकाः ॥ १६ ॥

दीर्घयुगेभ्यो रुद्धकपाटं
श्रुत्यभिधानं ह्रीश्वरबोधम् ।
मानवमात्रायार्पयितुस्तद्-
ब्रह्ममहर्षेर्गातय गीतम् ॥ १७ ॥

स्वोज्ज्वलतन्वा प्राञ्जलवाचा
निर्मलमत्या जाज्वलकृत्या ।
बोधयतस्तद्ब्रह्ममहर्षे-
गौरवगीतं गायत लोकाः ॥ १८ ॥

स्वोत्कटबुद्ध्या प्रोन्नतशक्त्या
स्वाद्भुतभव्योदात्तसरण्या ।
मानवकायाकल्पविधातु-
गौरवगीतं गायत लोकाः ॥ १९ ॥

मूर्तिसपर्यामध्वरहिंसां
प्रेतनिवापं जन्मजवर्णम् ।
वेदविरुद्धं घोषयतस्तत्
क्रान्तिमहर्षेर्गायत गीतम् ॥ २० ॥

साहसशौर्यौदार्यनिधानं
त्यागतपश्चर्याऽप्रतिमोत्सम् ।
धर्मदयादाक्षिण्यनिकेतं
धीरमहर्षिं गायत लोकाः ॥ २१ ॥

वर्णिवरेण्यं कर्मिवराग्र्यं
वाग्मिवरिष्ठं वादिविशिष्टम् ।
त्यागिगरिष्ठं मानिमहिष्ठं
गायत लोका धीरमहर्षिम् ॥ २२ ॥

ज्ञानिनरेन्द्रं ध्यानिधुरेन्द्रं
योगिवरेन्द्रं मौनिमहेन्द्रम् ।
क्षान्तिसमुद्रं धैर्यहिमाद्रिं
गायत लोका अद्भुतमौनिम् ॥ २३ ॥

# वीराय तस्मै नमः

यत्त्यागात्मसमर्पणाद्भुतकथां रोमाञ्चकृद्भास्वरां
श्रावं श्रावमसंख्यवीरपमैर्हौतात्म्यपूतात्मभिः ।
स्फूर्तिर्देशविमोचनस्य परमा लब्धा महापावनी
वन्दे भारतरत्नसावरकरं तं क्रान्तिवीरर्षभम् ॥ १ ॥

निःशेषं निजवित्तजीवितवपुस्तारुण्यसौख्यादिकं
सानन्दं सकलं स्वभारतभुवः स्वातन्त्र्ययज्ञार्पितम् ।
येनोग्रा यमयातनाश्च विविधाः सोढा निरोधे मुदा
वन्दे भारतरत्नसावरकरं स्वातन्त्र्यवीरेश्वरम् ॥ २ ॥

यो वै भारतमातृमस्तकमणिस्तेजस्विभव्योज्ज्वलो
यद्धुङ्कारवेण कम्पितमभूदाङ्ग्लाधिराज्यं भुवि ।
यद्विक्रान्तपराक्रमोर्जितकृतैरुद्भासितं भारतं
वन्दे भारतरत्नसावरकरं तं वीरचूडामणिम् ॥ ३ ॥

श्रुत्वा येन नितान्तनिर्ममवधं चाफेकराणां कृतं
दुर्गामातृसमक्षमेव कठिना बाल्ये प्रतिज्ञा कृता ।
यावद्भारतमोचनं न भविता स्वस्थो नहि स्यामिति
वन्दे भारतरत्नसावरकरं स्वातन्त्र्यवीरोत्तमम् ॥ ४ ॥

येनाकारि विदेशवस्त्रदहनं विद्यार्जनं कुर्वता
केतुर्लण्डनपत्तनाधिवसता क्रान्तेः समुत्तोलितः ।
कृत्वा भारतमुक्तियुद्धविषये ग्रन्थं महामौलिकं
वन्दे भारतरत्नसावरकरं तं क्रान्तिवीराधिपम् ॥ ५ ॥

धीङ्ग्रानामतदीयमित्रविहिताच्छूङ्गाटके लण्डने
घातात्कर्जनवायलेर्निगडितेनानीयमानेन वै ।
अब्धिर्येन विलङ्घ्य नूनमखिलं विश्वं हि विस्मापितं
वन्दे भारतरत्नसावरकरं तं क्रान्तिवीरोत्कटम् ॥ ६ ॥

लेख्याभाववशाद् विलिख्य कविता भित्तौ हि शल्येन यः
क्रान्तेर्भैरवसिंहनादमकरोत् संश्राव्य ता बन्दिनः ।
निद्रानाशकरं विदेशनृपतेराजीवनं द्रोहिणं
वन्दे भारतरत्नसावरकरं तं क्रान्तिवीरोद्भटम् ॥ ७ ॥

काराध्यक्षजनेन वीक्ष्य युतके पञ्चाशदित्यङ्कितं
पृष्टः सन्नुपहासगर्भमयि भो जीवेः किमेतत्क्षणम् ।
जीवेयं सुतरामहं तु भवतां राज्यं न जीवेद् ध्रुव-
मित्युत्तुङ्गसमर्थगां कथयते वीराय तस्मै नमः ॥ ८ ॥

भूयिष्ठं सवनं श्वशूकरसमं नैवास्ति नौ जीवनं
तिर्यञ्चोऽपि दिवानिशं विदधते तत्को विशेषोऽस्ति नौ ।
देशोद्धारकृते सहर्षमरणं नूनं हि तज्जीवन-
मित्थं शोकपरायणां स्वदयितां कारागृहेऽसान्त्वयत् ॥ ९ ॥

भीष्माचार्य इवाहवाहततनुः स्वाधीनकालान्तकः
श्रुत्वा भारतपाकसङ्गरमहाविक्रान्तगाथां मुदा ।
सङ्क्रान्ते च रवौ सुपुण्यमयनं पूर्णे स्वकृत्ये भुवि
तत्याजात्मविनाशिभौतिकतनुं प्रायोपवेशेन सः ॥ १० ॥

वागीशोऽप्रतिमः कविश्च निपुणो लब्धप्रथो लेखको
निष्णातो विधिवित् प्रकाण्डनयवित् संशोधकः पारगः ।
नायं केवलमात्रवीरपरमः साहित्यशौण्डोऽपि स
ग्रन्था यल्लिखिता भवन्ति सुतरां साहित्यशश्वन्निधिः ॥ ११ ॥

शैलेन्द्रोपमदिव्यभव्यधवलस्त्यागोऽपि चेत्तादृशो
स्वातन्त्र्यार्थंकृतः प्रयाति नितरां दुर्लक्षितः शासकैः ।
तेषां लाघवमेव केवलमहो नूनं व्यनक्त्यात्मनः
"कुतस्याः स्युः कुपरीक्षका यदि मणिस्तैरघंतः पातितः" ॥१२॥

१०-३-१९६६

## भोः ! पाकभूशासकाः !

युद्धोन्मादवशाद्विवेकविधुरा भोः पाकभूशासकाः !
अस्मच्छान्तिसहिष्णुतादिकगुणाः क्लैब्यं भवद्भिर्मताः ।
सौहार्दं सहजं विलुप्तमतिभिर्दैन्यं नु सन्तर्कितं
दुष्टानां दलने वयं तु विकटाः काला विजानन्तु भोः ॥ १ ॥

काश्मीरं प्रसभं स्वदेशवशगं कर्तुं भवद्भिः पुरा
पाकिस्तानसशस्त्रसैनिकयुताः पाटच्चराः प्रेषिताः ।
अस्माभिः कलहस्तु राष्ट्रसमितिं नीतो जगच्छान्तये
शस्त्रैस्तान् प्रतिहिंसितुं सुनिपुणे सज्जे बले सत्यपि ॥ २ ॥

काश्मीरप्रधने निषिध्य सुचिरं हस्तं स्वकीयं रह–
स्तस्मिन्नेव ततो निरीक्षकगणैः संसाधिते स्वीकृतं ।
आक्रान्तेति समस्तसभ्यजगता दुर्लाञ्छितस्सन्नपि
पाकिस्तान नृशंस नैव विरतो निर्लज्ज पापेप्सितात् ॥ ३ ॥

विश्रान्तिं ननु राष्ट्रसङ्घसभया युद्धस्य संयोजितां
आदावेव सहस्रशः समतिलङ्घ्याष्टादशाब्दावधौ ।
आक्रान्तः परुदेव भारतभुवः कच्छाख्यभागः पुनः
सन्धिं कच्छरणे विधाय पुरतः पश्चात् प्रहारः कृतः ॥ ४ ॥

पञ्चागष्टदिने विध्वंसनिपुणाः शस्त्रास्त्रयुक्ताश्चराः
कश्मीरे प्रहिता निनाशयिषया यात्रा प्रसङ्गेन ते ।
किन्त्वारक्षिगणैर्यदा निगडिताः संज्ञापिता नागरै-
र्युष्माभिर्विफलीकृतात्मघटनैः सज्जा चमूः प्रेषिता ॥ ५ ॥

आङ्ग्लामेरिकनादिमित्रनिवहप्रत्तैर्महाभीषणैः
पेटन्युद्धरथैश्च सेबरजटैर्नेपामबम्बोपमैः ।
शस्त्रास्त्रैर्बहुशक्तिकैरगणितैः सन्दीप्तयुद्धज्वरै-
र्युष्माभिः प्रथमे सितम्बरदिने काश्मीरभूर्लङ्घिता ॥ ६ ॥

भाषाजातिलघुप्रदेशकलहव्यासक्तहृन्मानसान्
मत्वाऽशक्ततमान्हि भारतजनान् योद्धुं पराभिद्रुते ।
पूर्वं सन्धिमसेर्विशुष्कभवनाद् युद्धैकबद्धस्पृहै-
र्युष्माभिः शलभायितं भरतभूसीमासमुल्लङ्घिभिः ॥ ७ ॥

टेङ्काः पेटनसन्निभाः सुविदिता ध्वस्ता यथा मृच्चया
अत्युत्कृष्टतमाश्च सेबरजटाः सम्पातिताः श्येनवत् ।
पाकिस्तानसुसज्जसैनिकबलं नष्टं कथं सत्वर-
मित्याश्चर्यमहोदधौ निपतितं विश्वं परं विस्मितम् ॥ ८ ॥

युद्धं केन जितं कदापि भुवने किं केवलैर्हेतिभिः
सत्तोन्मादवशैर्निरङ्कुशतमैः किं वा कदा शासकैः ।
शस्त्रं नैव युधं करोति समरे किन्तु प्रकोष्ठो दृढो
नूनं स्वार्थपरायणैर्भृतिभटैर्युद्धं न सञ्जीयते ॥ ९ ॥

देशोऽयं मम मातृभूरिति मया त्याज्यास्तदर्थासव
इत्युत्स्फूर्तरणप्रयाणकुशलैस्त्रैलोक्यलब्धप्रथैः ।
अस्मद्वीरभटैः स्वदेशघटितैः साधारणैरायुधैः
सन्नद्धाऽपि समग्रशस्त्रनिवहैः पाकस्य छिन्ना चमूः ॥ १० ॥

आक्रान्ते सति भारते तु सहसा युष्माभिरभ्यूहिता
हिन्दूमुस्लिमजातिचण्डकलहा नो केवलं नाभुवन् ।
ऐक्यं प्रत्युत दृष्टिगोचरमभूदाश्चर्यभूतं तयो–
र्यस्माद्भारतधर्षणस्य कुटिलाः स्वप्ना विशीर्णाः क्षणात् ॥ ११ ॥

हिन्दूमुस्लिमख्रिश्चनादिकजनैर्विस्मार्य भेदान् मिथो
ह्येकीभूय कृतं तथाद्भुततमं नूनं महाभारतम् ।
पेटन्जेटयुताऽपि पाकपृतना यस्माद्भयाद्विद्रुता
सिद्धान्तोऽपि सहैव भीषणतमो राष्ट्रद्वयाख्यो हतः ॥ १२ ॥

युद्धं नैव वयं कदापि मनसा वाञ्छामहे तत्त्वतः
शान्तिर्नाम दृढा विराजतुतरामित्येव नो काङ्क्षितम् ।
युष्माभिस्तु परप्रदेशहरणे बद्धस्पृहैर्वञ्चकै–
र्विश्वक्षेमपरायणाः शमयुता युद्धं वयं कारिताः ॥ १३ ॥

साधूनां परिरक्षणे च दलने बद्धादरा दुष्कृतां
श्रीकृष्णार्जुनरामभीमकुलजा दैन्यं न जानीमहे ।
हूनाः सीथियनाः शकाश्च यवना यूयं न जानीथ किं
भूलिप्साहितमानसा भरतभूसीमानिखाता यथा ॥ १४ ॥

भो भोः पाकसमर्थका जनपदाः ! तत्त्वं परिज्ञायतां
काश्मीरं नियमेन भारतभुवो जातं ह्यभिन्नाङ्गकम् ।
पूर्वं शस्त्रबलेन सम्प्रति पुनर्युष्मन्महानुग्रहात्
पाकोऽयं प्रसभं जिहीर्षुरधुना कस्मान्न निर्भर्त्स्यते ॥ १५ ॥

कश्मीरे बहुसङ्ख्यमुस्लिमजना इत्येव चेल्लिप्सते
तर्हीरान-तुरुष्क-जार्डनसमान् देशानपि प्रेप्सतु ।
किं पञ्चाधिककोटिमुस्लिमजनास्तिष्ठन्ति नो भारते
तेषां किं यदि पाकतर्कसरणीं स्वीकुर्महे तत्त्वतः ॥ १६ ॥

काश्मीरीयजनात्मनिर्णयकथा पाकेन या चाल्यते
वेतालश्रुतिशास्त्रपाठसदृशं नूनं मृषोद्यं हि तत् ।
कश्मीरे समभूत् त्रिवारवरणं निर्वाचितं शासनं
पाके नाभवदेकवारमपि यद् ह्यष्टादशाब्दावधौ ।। १७ ।।

सत्त्वैकत्र निरङ्कुशा जनमताधिक्षेपकृच्छासन-
मन्यत्राधिपहीनमुक्तजनतानिर्वाचितं शासनम् ।
एकं जातिपरं घृणापरिगतं मानुष्यनिष्ठं परं
यत्सत्यं भुवि लोकराज्यतरणीं तित्रासवो मज्जनात् ।।१८।।

भूलिप्सा नहि हेतुरत्र समरे यावद्द्वयं व्यापृताः
आरब्धः प्रथमं नवापि सुतरामस्माभिरालोच्यताम् ।
पाकिस्ताननिरङ्कुशप्रकृतिभिर्दर्पोद्धतैः शासकै-
रस्मच्छान्तिपरायणे हि विषये नूनं समारोपितः ।। १९ ।।

आङ्लामेरिकनादिराष्ट्रमुखरा ज्ञातं भवद्भिर्न किं
यत्पाकः प्रथमापकारकृदिति निम्मो स्वयं प्रोक्तवान् ।
पूर्वं[1] डिक्सननाममान्यविदुषाऽप्युक्तं यदुच्चै रवं
किं तर्हि प्रियराष्ट्रसङ्घनियमैर्व्यत्यस्तमाचर्यते ।। २० ।।

युष्मल्लब्धभयङ्करायुधगणान् टेङ्कांस्तथा सेबरान्
पाको भारतदेशधर्षणपरे युद्धे प्रयुञ्ज्यादिति ।
मा दातेति मुहुर्मुहुः कथयतोऽप्यस्मन्महामन्त्रिणश्
चीनीयाक्रमणावरोधमिषतः पाके भृशं वर्षिताः ।। २१ ।।

---

१ निम्मो + डिक्सन : Both have accused Pakistan of violation of truce. Dickson was U. N. O's chief supervisor in Kashmir long back.

एवं भारतपाकघोरसमरे पाताळभूशासकाः ।
प्रष्टव्या हि भवन्त एव परमा इत्यत्र नो संशयः ।
अस्वच्छूरभटान् निरीहसुजनान् निर्मानुषं निघ्नती
नैकैका गुलिका भवद्भिरभवत्पाकोपहारीकृता ? ॥ २२ ॥

भो आङ्ग्ला ! भुवनैकधौर्त्यगुरवः ! पाकस्य निर्मापकाः ।
भित्वा[२] तंत्रयतेति दुर्नयवतां पाको विपाको नु वः ।
पाकैराक्रमणे कृतेऽपि भवतां मूका महामन्त्रिण-
श्चास्माभिः प्रतिरोधमात्रविहिते त्वाक्रान्तमित्याक्रुशन् ॥ २३ ॥

इत्थं भो ननु राष्ट्रसङ्घजनका देशा हि युष्मादृशाः
सत्यासत्यविवेकमूढतयो वाचंयमा स्वार्थतः ।
आक्रान्ताक्रमकौ समानतुलया चेत्तोलयेयुस्तदा
शान्तिर्नाम कथं भविष्यति भवे यूनो च तिष्ठेत्कथम् ॥२४॥

एवं चेद्भुवि लोकराज्यसरणीं संरक्षितुं सस्पृहाः
शान्तिर्नाम दृढा तथैव भुवने सत्यं भवत्काङ्क्षितम् ।
दुःशीलां यदि पाक चीनसहतां यूयं ध्रुवं ध्यायथ
स्पष्टं तर्हि समर्थ्यतां भरतभूपक्षो जगच्छान्तये ॥ २५ ॥

१५-१२-६५

---

२ Divide and rule policy.

# भो ! देशभक्तोत्तमाः !!

भो भो ! भारतवासिबान्धवजना ! भो देशभक्तोत्तमाः ! !
यूयं किं मतिविभ्रमेण गदिताः किंवा मदोन्मादिताः ।
उद्भ्रान्ता अथवा विमूढमतयो जाता नु किं वातुला
यस्माद् भोः कलहं मिथो विदधतो नाशोन्मुखं धावथ ।।१।।

* रुद्धा बाष्परथाश्च तैलशकटाः संस्तम्भ्य सन्दीपिताः
क्रोधान्धैर्मुषितं च सार्वजनिकं रिक्थं जनैर्नाशितम् ।
किंकर्तव्यविमूढरक्षकगणैर्गोलाभिवर्षे कृते
पञ्चत्वं बहवो जनाः परिगता इत्थं पठामोऽनिशम् ।।२।।

* कञ्चित्स्वार्थविरोधिनं तु नितरां राष्ट्रोपकृन्निर्णयं
स्वच्छन्दं परिवर्तनाय बलवद् हिंसाघृणातत्परैः ।
चित्रं ! लोकसभाविधानपरिषन्निर्वाचितैः पार्षदैः
स्पष्टं सार्वजनीनवित्तदहनध्वंसादिकं कार्यते ।।३।।

* सीमावर्तिपुरं क्वचिन्निवसथं देशे स्वकीये स्थित-
मन्तर्भावयितुं प्रदेशपरिधौ घोरं जनैर्युध्यते ।
भाषार्थं क्रियते क्वचिच्च कलहः सामर्षघातोद्यतै-
रुद्विग्नः प्रतिभाति कोऽपि न परं त्रातुं हिमाद्रि परात् ।।४।।

यातायातनिरोधनं नियमनं हट्टापणानां बला-
ज्ज्वालासात्करणं स्वदेशविभवं हस्तैः स्वकीयैः क्रुधा ।
छात्राणां च निरर्गलव्यवहृतेर्विद्यालयस्तम्भनं
किं स्वायत्तविकासशीलविषयव्यावर्तकं तद्भवेत् ।।५।।

---

* प्रत्यक्षीकृतमेतत् सर्वैर्मैसूरमहाराष्ट्रसीमाविवादे जाते संघर्षे तथैव च मद्रास-प्रान्ते जाते भाषाविवादे ।

चीनाः सोपधिसन्धिदूषणपरा आगस्कृता मायिनः
पाकाश्चाजनिघोरवैरनिरताः संहृत्य संघातुकाः ।
छिद्रान्वेषिपरोपजापपरमाश्चान्तर्गताः शत्रवो
याता किं सहसैव विस्मृतिपथं यस्मान्मिथो युध्यते ॥६॥

आ स्वातन्त्र्यरणाद्धि वर्षशतकादाचीनपाकाक्रमं
कारावाससहर्षमृत्युवरणप्रायाणि कष्टानि यैः ।
स्वातन्त्र्याध्वरदीक्षितामितजनैः सोढानि सन्त्यागिभिः
किं तत्त्यागकठोरदीर्घतपसामेतद्धि मूल्यं कृतम् ॥७॥

देशो विश्वगुरोर्हि गौरवमयं तुङ्गं पदं लङ्घितः
* सौवर्णी चटकेति विश्वविदितः सम्पन्नदेशाग्रणीः ।
लब्धुं यत्र जनिं सुरासुरगणैस्तेपे तपो दुश्चरं
भ्रातॄणां कलहाद्रसातलमगाद् यूयं न जानीथ किम् ॥८॥

धैर्यौदार्यसहिष्णुतागुणमयीं गङ्गापयःपावनीं
विश्वक्षेमपरायणां शमयुतां सौहार्दसंवर्धनीम् ।
श्रेष्ठां भारतवर्षगौरवमयीं सर्वंसहां संस्कृतिं
विस्मृत्यैकपदे कथं कुरुत भो युद्धं मिथो निष्फलम् ॥९॥

सत्ताधिष्ठितपक्षनायकवरा ! दिल्लीश्वराः ! श्रूयतां
युष्माकं प्रतिवाच्यतातिमहती ह्यस्मिन्महासङ्कुले ।
सेवोत्सर्गसमर्पणादिकमयीमूर्जस्वलां पद्धतिं
सन्त्यज्यात्मपरैर्भवद्भिरधुना स्वार्थार्चकैर्भूयते ॥१०॥

भो भो लोकसभाविधानपरिषन्निर्वाचिताः पार्षदाः !
आदर्शां जनतन्त्रसभ्यसरणीमुल्लङ्घ्य तां सम्मताम् ।
स्वैरोद्दण्डनिरङ्कुशं प्रतिदिनं युष्माभिराचर्यते
तस्यैवानुकृतिं जनान् विदधतः सर्वत्र वीक्षामहे ॥११॥

---

* सोने की चिड़िया इति प्रसिद्धं भाषायाम्

छात्रान्दोलनदोलितं प्रमथितं प्रेक्षामहे भारतं
हित्वा शान्तिविवेकशिष्टसरणीं वैधानिकां शोभनाम् ।
युक्तायुक्तविवेकमूढमतयो विध्वंसमार्गोन्मुखाः
संहारोद्दलनं तथा विदधते चिन्ताकुला यज्जनाः ।।१२।।

छात्रानुत्तरकालराष्ट्रघटकान्निर्मातृसन्धारकान्
मा मा पक्षनयाय योजयत भो ! पक्षान्तराध्वर्यवः !
निर्माणीकृषिकर्मशिक्षणगृहारोधावबन्धैः पुनः
को लाभःश्रमजीविनां भवति भो राष्ट्रस्य हानिं विना ।।१३

छात्राणां विविधा भवन्ति कठिना कामं समस्याः खलु
साध्याः किं नहि सन्ति तास्तु सुधियश्! चर्चाविवादादिभिः।
यस्मात्साधयितुं भवद्भिरधुना ता एव संङ्घटचते
हिंसाद्वेषपरैर्विनाशपिशुनैर्विध्वंसकैः साधनैः ।।१४।।

सत्यासत्यविवेकधर्मपरमा ज्ञानैकनिष्ठा जनाश्
छात्रा एव समाचरन्ति ननु चेदुच्छृङखलं हीदृशम् ।
सन्दिग्धा प्रतिभाति भारतभुवः सम्पन्नदीर्घायति-
र्मोघं हन्त ! हताश्च पूर्वपुरुषा यैरात्मयज्ञः कृतः ।। १५ ।।

भोः सङ्कीर्णविचारदूषितदृशः प्रान्तीयनेतृब्रुवाः !
दूरीकृत्य मनाक् प्रदेशनयनं विस्तीर्णमालोक्यताम् ।
ऐक्यं सांस्कृतिकं स्वभारतभुवो ह्यासेतुशैलाधिपं
भाषाजातिलघुप्रदेशविभिदातीतं च सर्वङ्कषम् ।। १६ ।।

कालोऽयं सुधियो नितान्तकठिनो देशाय जानीत न-
श्चीना उत्तरतस्तथा ह्युभयतः पाका महाघातुकाः ।
राष्ट्रान्तर्गतगूढशत्रुनिवहः सम्मिल्य सन्द्रोहिण-
स्ताटस्थ्यं भजमानमित्रविषयाश्चास्मन्मिथोऽनैक्यतः ।।१७

अस्मिन् घोरतरातिसङ्कटयुते काले महासङ्कुले
भाषाजातिलघुप्रदेशकलहान् विस्मार्य भोः क्षुल्लकान् ।
देशान्तर्गतबाह्यशत्रुनिकरः सम्भूय संयुध्यतां
कष्टोपार्जितभारतीयजनतास्वाधीनता रक्ष्यताम् ।।१८।।

## स्वातन्त्र्योपहासः

लोकानन्दावहनसुभगो दीनदुःखान्तहेतुः
सङ्ख्यातीतप्रवरनरवीरात्मयज्ञावतीर्णः ।
स्वाधीनत्वामरसुरसरिद्दिव्यभव्यप्रवाहो
नूनं दिल्ल्यां धनिकजनहर्म्येषु चैवावरुद्धः ।। १ ।।

तस्माद्दिल्लीश्वरधनवतां बन्धनात्तं विमोच्य
ग्रामीणानां प्रतिगृहकुटीराङ्गणं च प्रवाह्य ।
कायाकल्पः श्रमिककृषकाणां च यावन्न भावी
स्वाधीनत्वं भरतविषयस्यार्थपूर्णं न तावत् ।। २ ।।

पञ्चत्रिंशच्छरदवधिके दीर्घकालेऽपि याते
स्वल्पापेक्षामशनवसनावासविषयां जनानाम् ।
पूर्णां कर्तुं प्रभवति न यत् तस्य राष्ट्रस्य तेन
स्वातन्त्र्येण श्रमिककृषिकाणां हि कार्यं किमस्ति ।। ३ ।।

देशे दीना अनुदिनमहो दीनदीना भवन्ति
सम्पन्नाश्चाभ्यधिकसधनाः शक्तिमन्तश्च नित्यम् ।
सम्पन्नाकिञ्चनजनगणाभ्यन्तरे वर्धमानं
क्षेमाकाङ्क्षैः सपदि परिहर्तव्यमेवान्तरालम् ।। ४ ।।

केचिद्देशे परमसुखिता वित्तमोहेन मूढाः
अन्ये दीना विभवरहिता दैन्यरेखावराश्च ।
कुर्वाणाः किञ्चन न सधनाः सर्वसौख्येन युक्ताः
श्राम्यन्तोऽपि श्रमिककृषका निर्धनाभावपूर्णाः ।। ५ ।।

भक्ष्याधिक्यात् सततगदिता एकतो वित्तमन्तः
क्षुत्संत्रस्ता मरणशरणा अन्यतो दीनहीनाः
हर्म्येष्वेके नृपकुलसमेष्वाप्तकामा वसन्ति
दीनाश्चान्ये कथमपि कुटीरेषु कालं नयन्ति ।। ६ ।।

कौशेयौर्णप्रवररुचिराकल्पनेपथ्यवन्तः
केचिद् रत्नाभरणरुचिताः प्रत्यहं नैकवस्त्राः ।
नग्नप्रायाः क्वचिदपि जनाः जीर्णचीराश्च केचि-
न्निर्नेपथ्या वसनरहिताः शैत्यवातातपार्ताः ।। ७ ।।

एकत्राभ्रङ्कषगृहततिः सर्वसौविध्यपूर्णा
चान्यत्राकिञ्चनजनकुटीरावलिः सर्वशून्या ।
सौधेष्वत्याधुनिकसुखपूर्णेषु केचित्स्वपन्ते
रथ्यापार्श्वे पटलरहिते शेरते चान्यदीनाः ।। ८ ।।

हर्षोल्लासाः क्वचिदपि विलासोत्सवापानगोष्ठ्यो
हा हा शोकः क्वचिदपि च दारिद्र्यदुःखाहतानाम् ।
भास्वद्दीप्ता क्वचिदतिसुखा पूर्णिमा पूर्णचन्द्रा
ध्वान्ताच्छन्ना क्वचिदपि तमा दुःखदारिद्र्यपूर्णा ।। ९ ।।

उच्छिष्टान्नप्रतनुकणिकाः क्षिप्तपत्रावलग्नाः
प्राप्तुं श्वाना इव कलहिता एकतो दीनहीनाः ।
सन्त्यन्यत्र प्रचुररुचिरस्वादुमिष्टान्नभक्ष्या
लक्ष्मीपुत्राः कनकरजतश्वेतपात्रेषु नित्यम् ।। १० ।।

कैश्चिल्लक्ष्मीश्वरगृहगतैः श्वानमार्जारपोतै-
र्यद्दुग्धान्नादिकमिह परित्यज्यते भुक्तशेषम् ।
तस्याल्पांशोऽप्यधनमनुजापत्यजातैर्न लभ्यं
क्षुत्सन्त्रस्ताः कति न शिशवः प्रत्यहं हा म्रियन्ते ॥ ११ ॥

पायं पायं ह्यनघरुधिरं दीनशोषं विधाय
प्रोत्तिष्ठन्ति प्रचुरधनवत्तुङ्गसौधानि नित्यम् ।
श्रीमन्तश्च श्रमिकजनितैश्वर्यमत्ता भवन्ति
ह्युत्साद्येयं परमविषमा दुःस्थितिर्मानवानाम् ॥ १२ ॥

नूनं ह्येषा कठिनविषमा दुःस्थितिर्मानवानां
नैवेशेनापिच न विधिना नापि भाग्येन सृष्टा ।
स्वार्थोद्भ्रान्तैर्मनुजदनुजैर्वित्तमूढैस्तु क्लृप्ता
मूलोत्पाट्या भवति सुतरां मानवेनैव तस्मात् ॥ १३ ॥

स्विद्यद्गात्रैः श्रमिककृषकैः क्षेत्रशिल्पालयेषु
सम्भूयोत्पादितबहुधनैश्वर्यलब्धवंशमेव ।
तेभ्यो दत्वा चतुरधनिकैर्भुज्यते सर्वमेव
स्तेयं सामाजिकविषमताहेतुरेतद् बभूव ॥ १४ ॥

वाताम्भोभूदिनकरकरोपायनं तुल्यरूपं
किं लोकेभ्यो नहि वितरितं भूतनाथेन मुक्तम् ।
नूनं लोका नहि भगवता दुःख भोगाय सृष्टा
दुःखोत्पत्तिर्भवति भुवने मानवस्यात्मकार्यात् ॥ १५ ॥

देशे सृष्टिर्भवति विपुला खाद्यवस्त्रादिकानां
सङ्ख्यातीतास्त्वशनवसनावासहीनाश्च लोकाः ।
हस्ते तेषां खलु धनवतां सञ्चितत्वादभाव-
स्तेषां सम्यग् वितरणसमस्यैव नूनं कराला ॥ १६ ॥

आमूलाग्रं निखिलविषये सर्वकार्यालयेषु
व्याप्ता भ्रष्टाचरणसरणिः कार्यचौर्यप्रवृत्तिः ।
नानोत्कोचं भवति विरला कार्यसिद्धिर्हि तत्र
भ्रष्टाचारो भवति नियमः शुद्धता चापवादः ॥ १७ ॥

लोकानामार्थिकविषमताहेतुभूतं पुराणं
जीर्णं शीर्णं विगलिततरं भारतीयार्थतन्त्रम् ।
निःसार्यान्यं श्रमिककृषिकोत्कर्षसक्तं नवीनं
स्थाप्यं नूनं ह्यभिनवसमाजस्य निर्माणकारि ॥१८॥

अन्धश्रद्धं नियतिपरमं दैववादावरुद्धं
रूढिग्रस्तं भरतविषयं बुद्धिवादप्रतीपम् ।
यावद् भावान्तरमिह नयामो न विज्ञाननिष्ठं
तावद् दैन्यासुरपिशुनपाशान्न मुक्तिस्तदीया ॥ १९ ॥

प्राक्कालीनं सकलमभिनन्द्यं न निन्द्यं नवीनं
पूर्वैः सम्प्रस्तुतबहुमता रीतयः सम्प्रदायाः ।
काले याते जनपरिहृता यातयामा भवन्ति
बाल्ये स्यूतं तरुणवयसा धार्यते किं सुवस्त्रम् ॥२०॥

धर्माचारे वितथगणिताः कालबाह्या विचारा
लोकाचाराः कतिपयसमाम्नातदुष्कल्पनाश्च ।
न स्वीकार्या पिहितमनसा तर्कचक्षुर्निमील्य
संग्राह्यं तद् यदभिरुचितं साम्प्रतं युक्तियुक्तम् ॥ २१ ॥

पारम्पर्यप्रियमतितरामन्धविश्वासभाजं
दैवाधीनं स्थितिपरवशं नव्यविद्वेषपूर्णम् ।
प्रज्ञावादाद् निगमवचसैवाप्तवाक्यप्रमाणं
कार्यं राष्ट्रं ह्यभिनवदृशं बुद्धिवादप्रवृत्तम् ॥ २२ ॥

सङ्कुचास्फीतिः प्रतिदिनमियं ह्येकसो जायमाना
वृद्धिं गच्छन्ननुदिनमसावन्यतो वृत्त्यभावः ।
भ्रष्टाचारो विनयविरहो व्याप्तनैराश्यभावो
राष्ट्रं क्षेप्तुं परमगहने नाशगर्ते समर्थाः ।। २३ ।।

जन्मायत्तां मनुजगुणकर्मानपेक्ष्य प्रवृत्तां
देशे सामाजिकविषमताजातिरोगादिमूलाम् ।
व्यक्त्युत्कर्षप्रगतिसमतारोधिवर्णव्यवस्थां
निष्कास्यान्या प्रकृतिगुणकर्मानुबद्धा प्रचाल्या ।।२४।।

विद्याज्ञानप्रकृतिमतितर्कोहयुक्तिप्रतीप-
मन्धश्रद्धाश्रितकतिपयाचाररूढिप्रपञ्चम् ।
धर्माभासं प्रबलतमतर्कोहशस्त्रैर्विखण्ड्य
स्थाप्यो धर्मो यमनियमसत्तत्त्वविज्ञानयुक्तः ।। २५ ।।

धर्मो नूनं सकलभुवने स्वान्तरङ्गे च मर्त्यै-
र्विश्वव्यापिप्रभुवरमहाशक्तिसत्तानुभूतिः ।
तस्याः स्वाभाविकपरिणतिर्भूतमात्रानुकम्पा
सौभ्रात्रं चाखिलजनगणैः स्नेहसौहार्दभावः ।।२६।।

सर्वे नूनं भुवनजनकस्यैव पुत्राः समानाः
सौभ्रात्रं तद् सहजनियतं मानवानां समानम् ।
श्रैष्ठ्याश्रैष्ठ्यं जननविहितं विद्यते नैव तेषु
ह्यस्पृश्यत्वं कथमिव भवेत् भ्रातृवर्ग्येषु नाम ।। २७ ।।

दिव्योदात्ता भुवनविदिता संस्कृतिर्वैदिकी नः
प्रोच्चैरुद्घोषयति समतां बन्धुतां मानवानाम् ।
स्पष्टं तेषामशनवसनावाससाम्यं हि वेदे
नूनं सर्वे भुवनमनुजा बन्धुभावेन बद्धाः ।। २८ ।।

१५-१०-८२




# भीषणं दुर्भिक्षम्

हे विश्वपालकपितर्जगदेकबन्धो !
कारुण्यसागर ! दयाघन ! देवदेव !।
जातं किमद्य विपरीतमहो न जाने
सर्गोऽन्नपानविकलो हि मुमूर्षुरेषः ॥ १ ॥

किं शोष्यतां तव दयाजलधिः प्रयातः
किंवा विपाकमभियातमघं प्रजानाम् ।
जीवा यतो हि शतशो जलभक्ष्यहीना
मृत्योर्मुखे प्रतिदिनं विवशा विशन्ति ॥ २ ॥

महाराष्ट्र - मैसुर - महागुजरातराज्ये-
ष्वत्युग्रभीषणविलासविचेष्टितेन ।
कालेन रौद्रतरचेष्टितमेषमो यत्
तल्लेखनी नहि समङ्कनसक्षमा मे ॥ ३ ॥

वर्षत्रयं न सततं समभूत् सुवर्षा
वृष्टिर्मनागपि न केषुचिदेषमोऽभूत् ।
अन्येषु शीकर इवाल्पतरं बभूव
सर्वत्र चेत्थमभवत् खलु वृष्ट्यभावः ॥ ४ ॥

वापीनदीनदसरोवरनिर्झराणि
जातानि वारिरहितानि च पङ्कवन्ति ।
शुष्काणि शाद्वलमयानि हरिद्वनानि
क्षेत्राणि सस्यहरितानि मरुस्थलानि ॥ ५ ॥

क्षेत्राणि सस्यरमणीयतराणि पूर्वं
वर्षावरोधवशतोऽद्य खिलोषराणि ।
नायान्ति दृष्टिपथमत्र हरितृणानि
शुष्काणि केवलमहो वनगुल्मकानि ॥ ६ ॥

दैवीयदारुणविपत्तिररुन्तुदेयं
पौरांश्च नागरजनान्न तथा पिनष्टि ।
क्लिश्नाति जानपदिकान् हि यथा वराकां-
स्तेषां हि सर्वमपि वृष्टिजलावलम्बि ॥ ७ ॥

वर्षावलम्बि कृषिकर्म कृषेरधीनं
सस्यं तृणं च भवतो हि तयोरधीनम् ।
तेषां तथैव वृषभादिकजीवनं च
नूनं न किञ्चिदिह कष्टकरं ह्यवर्षात् ॥ ८ ॥

कुत्राप्यवर्षणवशान्न कृषिर्न सस्यं
लोकाय कार्यमत एव गृहे न कृष्याम् ।
उद्योगवृत्तिरहिता क्षुधयाऽभिभूता
दारिद्र्यदूनजनता समभूद्विमूढा ॥ ९ ॥

उद्दीप्तजाठरहुताशनतोषणाय
सौवर्णराजतविभूषणभाजनानि ।
प्राणप्रियं पशुधनं गृहवस्तुजातं
व्यक्रायि सर्वमपि काकिनिमूल्यकेन ॥ १० ॥

दुर्भिक्षपीडितजनैः परमेशदत्तं
निःशुल्कमाप्यमपि पेयजलं न लभ्यम् ।
स्थानान्तरात्सुबहुदूरगतात्तदेव
प्राप्यं जनैर्भवति जीवनरक्षणाय ॥ ११ ॥

क्षुत्क्षामविह्वलपशून् सुतनिर्विशेषा-
नापृच्छ्य बाष्पभरितैर्नयनैः सखेदम् ।
लोकाः शिरोनिहितकिञ्चनवस्तुजाता-
स्त्रातुं स्वयं कथमपि स्वगृहात् प्रयाताः ॥ १२ ॥

प्रेष्ठानि गोवृषभभूमिनिकेतनानि
सन्त्यज्य सर्वमपि शोकविमूढलोकाः ।
वृत्त्यर्जनाय चलिता विवशाः वराकाः
प्राणाधिकं प्रियतरं भुवि नास्ति जन्तोः ॥ १३ ॥

ग्रामा नितान्तविजना अभवन्ननेके
संङ्ख्याविहीनपशवः क्षुधया विपन्नाः ।
क्षुत्क्षामकण्ठविवरागतजीविताश्च
लोका हि नूनमभवन् प्रचलत्करङ्काः ॥ १४ ॥

ग्रामीणनिर्धनजनार्तिरवर्णनीया
पूर्वं भयङ्करमहार्घतया प्रतप्ताः ।
दुर्भिक्षदानवनिपीडनसंस्थिता नु
गण्डोपरीर्ममिव दुःखमतीव तीव्रम् ॥ १५ ॥

निष्पापनिर्ममनिरीहनिरागसोऽपि
राष्ट्रस्य भाविनिधयः शिशवो ह्यसङ्ख्याः ।
दुग्धान्नशिक्षणविनाकृतमन्दभाग्या
नीताः सुदूरनगरं खलु वृत्तिहेतोः ॥ १६ ॥

दुर्भिक्षदारुणविपत्तिरियं पशूना-
मत्यन्तभीषणभयङ्करतापकर्त्री ।
धान्यादिकं तु विषयान्तरलभ्यमेव
दुष्प्राप्य एव भुवने पशुभक्ष्यघासः ॥ १७ ॥

आङ्ग्लाधिराज्यमिह चेदधुनाऽभविष्यत् ।
कोटच्युत्तरो नियतमेव जनोऽमरिष्यत् ।
वङ्गे ह्यसङ्ख्यजनता क्षुधया मृताऽऽसीत्
क्लेशावहं किमपि नैव विदेशराज्यात् ॥ १८ ॥

दुर्भिक्षतप्तजनरक्षणदीक्षितेन
स्वायत्तलोकहितदक्षसुशासनेन ।
कार्याणि नैकविधलोकहितान्वयानि
प्रस्तावितानि शतशो जनलाभवन्ति ॥ १९ ॥

नीवाकदैवविपदाहतवृत्तिहेतोः
सर्वत्र कूपखननाध्वतटाकवापी–
निर्माणकार्यनिवहं बहुधा प्रवृत्तं
स्वाधीनशासनमहो महनीयलाभम् ॥ २० ॥

भूस्वामिनोऽपि शतशो बहुभृत्यसेव्याः
कार्येष्वमीषु निजशासनचालितेषु
श्राम्यन्ति भारहरवत् खलु जीविकार्थं
नैसर्गिकी विपदहो समकारिणीयम् ॥ २१ ॥

कष्टानभिज्ञसुखलालितकोमलाङ्ग्यो
वातातपासुसहना ललनाः कुलीनाः ।
द्रुच्छायशायितसुता हतदैवभाजः
प्रस्विन्नगात्रलतिका विवशास्तपन्ति ॥ २२ ॥

दुष्कालकालकवलीकृतबालकानां
को वाऽपराध इति निष्कलुषामलानाम् ।
जानीमहे न भगवन्! कृतभूरियत्नाः
ज्ञातुं प्रभुर्नहि नरस्तव गूढसृष्टिम् ॥ २३ ॥

वृष्टिर्भविष्यति हसिष्यति भूमुखश्रीः
कालोऽपि यास्यति पुनः कठिनः करालः ।
सस्योत्कटा वसुमती च भविष्यतीति
लोका नयन्ति दिवसान् खलु सव्यपेक्षाः ॥ २४ ॥

हे भूतभावन ! विभो ! भवतापहारिन् !
संसाररङ्गनटनाटनसूत्रधार ! ।
तृष्णाक्षुधाऽऽकुलितविह्वलजीवलोकं
संरक्ष तारय कृपां कुरु देवदेव ! ॥ २५ ॥

१०-११-७४

## सन्नागरा एव यथार्थराष्ट्रम्

चिरेण निर्यन्त्रितभारतस्य
कल्याणभाग्योदयकर्तुकामैः ।
विभिन्नदीर्घावधियोजनानां
प्रवृत्तिरद्य क्रियते धुरीणैः ॥ १ ॥

उत्पाट्य घोरोग्रवनाद्रिशैलान्
नदीषु निर्माय च सेतुबन्धान् ।
रथ्याप्रतोल्यश्च परःसहस्राः
समस्तदेशे खलु निर्मितास्तैः ॥ २ ॥

नानानदीतुङ्गविशालबन्धै-
र्निरुद्धतोयौघजलप्रवाहान् ।
प्रवाह्य कुल्याजलवाहिकाभि-
र्देशो नदीमातृक एव चक्रे ॥ ३ ॥

अश्मेष्टकोत्तुङ्गविशालसौधै-
र्नभःस्पृशट्टालिकहर्म्यवृन्दैः ।
प्रचण्डकार्यालयसंविधानै
राष्ट्रस्य निर्माणमभीप्सितं तैः ॥ ४ ॥

किन्त्वस्य निर्माणविधेः प्रधानं
लक्ष्यं यदर्थं च नियोजनानि ।
स एव चैतन्यमयो मनुष्यः
सर्वैरहो विस्मृत एव नूनम् ॥ ५ ॥

राष्ट्रस्य निर्माणविधानकार्यं
नाश्मेष्टकोत्तुङ्गविशालसौधैः ।
न चापि घण्टापथसेतुबन्धै-
र्न भावि कुल्यादिकजालवृन्दैः ॥ ६ ॥

न भूमिखण्डो न वनानि नद्यो
न पर्वता नैव महापुराणि ।
नाट्टालिका नैव च कार्यशाला
यथार्थरूपेण भवन्ति राष्ट्रम् ॥ ७ ॥

इमानि सर्वाणि बहिःशरीरं
राष्ट्रान्तरात्मा तु तदीयलोकाः ।
चारित्र्यवन्तो निजदेशभक्ता
मानुष्यधर्मेण परेण युक्ताः ॥ ८ ॥

सर्वाङ्गलावण्यसुपूर्णदेहः
सौवर्णरम्याद्भुतभूषणाढ्यः ।
यथाऽऽत्मतत्त्वेन विना न भाति
तथैव सन्नागरहीनराष्ट्रम् ॥ ९ ॥

राष्ट्रात्मभूतान् हि जनान् विधातु-
मुदात्तवृत्तोज्ज्वलचारुशीलान् ।
सन्नागरान् राष्ट्रहितैकनिष्ठा-
नायोजनं किं विहितं स्वदेशे ॥ १० ॥

गोसारमेयादिकवंशवृद्धयै
समाचरद्भिर्बहुयत्नजातम् ।
चित्रं कृतः कोऽपि नरैर्न यत्नो
मानुष्यचारित्र्यगुणोपचित्यै ॥ ११ ॥

अतोऽद्य सम्पूर्णसमृद्धिपूर्णे
राष्ट्रेऽपि शान्तिर्न सुखं न तृप्तिः ।
जना हि संस्कारचरित्रवन्तः
कस्यापि राष्ट्रस्य यथार्थसम्पत् ॥ १२ ॥

राष्ट्रस्य निर्माणविधातुकामै-
र्मनुष्यनिर्माणविधावश्यम् ।
कार्यः प्रयत्नः प्रथमं धुरीणै-
र्नो चेद्भवेन्निष्फलमेव सर्वम् ॥ १३ ॥

ऐश्वर्यसम्पन्नसमृद्धराष्ट्रे
जना यदि स्युर्न चरित्रवन्तः ।
भ्रष्टाः शठा वञ्चकमायिनश्चेत्
को वा गुणस्तस्य धनाढ्यतायाः ॥ १४ ॥

सौभाग्यसम्पन्नधनाढ्यदेशे
हिंसाघृणाद्वेषविलुण्ठनानाम्
प्रमाणमत्यन्तिकवर्धमानं
निदर्शनं कस्य भवेद्विचार्यम् ॥ १५ ॥

भ्रष्टत्वमूलं न भवन्ति देशे
क्षुद्दैन्यदारिद्र्यविपन्नलोकाः ।
भ्रष्टप्रवृत्तेः खलु जन्मभूमि-
र्धनाढ्यसम्पन्नसमृद्धलोकाः ॥ १६ ॥

यथा यथा राष्ट्रमुपैति वृद्धिं
तथा तथा भ्रष्टपथप्रवृत्तिः ।
देशे समुत्थानमुपैति वेगा-
न्मोघान्यतः सर्वनियोजनानि ॥ १७ ॥

यावन्महामानवसंविधानं
निर्माणमेवात्र भवेन्न लक्ष्यम् ।
समस्तसंयोजनमूलभित्ति-
स्तावन्न शान्तिर्न सुखं न शर्म ॥ १८ ॥

मत्वा नरं केवलभूतसङ्घं
तृष्णाक्षुधाभौतिकमांसपिण्डम् ।
अकारि सर्वाणि नियोजनानि
राष्ट्रीयसंयोजनकर्णधारैः ॥ १९ ॥

अस्मन्महासंस्कृतिरुच्चराव-
मुद्घोषयामास पुनः पुनश्च ।
यन्मानवो नैव शरीरमात्रं
तस्यान्तरं चेतनमात्मतत्त्वम् ॥ २० ॥

सत्यक्षमास्नेहपरोपकाराः
सौभ्रात्रसौहार्ददयादिकानि ।
आध्यात्मिकोत्कर्षसहोदराणि
भवन्ति तत्त्वानि न भौतिकानि ॥ २१ ॥

आध्यात्मिकोर्षविना न लोके
सौख्यावहा केवलभौतिकर्द्धिः ।
आचारसंस्कारविहीनलोका
नाशाय सर्वं खलु कल्पयेयुः ॥ २२ ॥

आध्यात्मिकोत्थानविहीनलोकैः-
वैज्ञानिकाविष्कृतसौख्यसम्पत् ।
ध्रुवं प्रयुज्येत विनाशहेतोः
पाकार्थवह्निर्दहने यथाऽसौ ॥ २३ ॥

शक्तिर्हि या मानवसौख्यशान्त्यै
प्रयुज्यते सैव विनाशहेतोः ।
हिरोशिमा नाम महापुरी कि-
मण्वस्त्रशक्त्या न विनाशिताऽऽसीत् ॥ २४ ॥

मानुष्यसौख्यार्थविनिर्मितानि
प्रचण्डवेगोत्कटवाहनानि ।
आरूह्य निष्पापनिरीहलोका
लुण्ठयन्त एवाद्य दुरात्मलोकैः ॥ २५ ॥

महामुनीन्द्रैरत एव पूर्वं-
र्मनुष्यनिर्माणधिया प्रवृत्तैः ।
संस्काररीतिः परिचालिताऽऽसी-
दा जन्मनश्चामरणं सुधीभिः ॥ २६ ॥

भवन्ति शूद्रा जननात्समस्ता
द्विजास्तु संस्कारवशाद्भवन्ति ।
कुक्षिप्रवेशात्प्रभृति प्रसूतेः
कृता हि संस्कारवृतिः समन्तात् ॥ २७ ॥

किन्त्वद्य सा छिन्नतरा बभूव
विवाहदाहद्वयवर्जमन्या ।
संस्कारशून्यानि गृहाण्यभूवन्
शालाः प्रशालाश्च तथैव जाताः ॥ २८ ॥

अत्रैव लोके प्रथमं बभूव
मनुष्यनिर्माणविधौ प्रयत्नः ।
अत्रैव विश्वं खलु दीक्षितं च
संस्कारचारित्र्यविधौ समस्तम् ॥ २९ ॥

व्यत्यस्तमेवाद्य बभूव सर्वं
विस्मृत्य पूर्वं महनीयवृत्तम् ।
आचारसंस्कारचरित्ररिक्थं
लोका हि पाश्चात्यपथप्रवृत्ताः ॥ ३० ॥

विश्वं यदा डार्विणतत्त्वरूपं
द्रुमाद् द्रुमं चोत्प्लवमानमासीत् ।
उच्चैस्तरं संस्कृतिसभ्यताग्र-
मारूढमासीद् भुवि भारतेन ॥ ३१ ॥

नवीनशिक्षाविधिकल्पनाय
चिन्तापरैर्भारतकर्णधारैः ।
विख्यातशिक्षाविधिपारगैश्च
न कर्हिचिद्विस्मरणीयमेतत् ॥ ३२ ॥

प्राचीनभव्योज्ज्वलभारतस्य
प्रोत्तुङ्गदिव्यार्षपरम्पराणाम् ।
विस्मार्यं नूनं भवितुं कदाचिच्
शिक्षाविधिर्नार्हति भारतस्य ॥ ३३ ॥

वसुन्धरादेशिकभारतस्य
प्राचीनकालागतसम्प्रदायम् ।
सनातनाम्नायपरम्परां च
विच्छिद्य शिक्षा नहि चिन्तनीया ।। ३४ ।।

अनादिकालागतभारतीय-
साहित्यसंगीतकलेतिहास-
प्रधानसंवाहकदिव्यवाणी
पाठ्यक्रमान्नैव निवारणीया ।। ३५ ।।

आदर्शसन्मानवकल्पयन्ती
संस्कारचारित्र्यविवर्धयन्ती ।
आवश्यकी मानवधर्मशिक्षा
कार्याऽनिवार्या नवशिक्षणे वै ।। ३६ ।।

११-११-८५



# बाङ्ग्लामुक्तिसङ्ग्रामः

भो ! तैमूर - हलाकु - नादिरशहा - चङ्गीजखानानुगाः
यूयं भो ! अनघासृगाक्ततनवो युद्धज्वरोन्मादिनः ।
पाकिस्तानमतान्धशास्तृहतका जानीत यूयं ध्रुवं
जाता वः शतपापपूर्तिरधुना नाल्लोऽपि रक्षिष्यति ।। १ ।।

चीनामेरिकनादिराष्ट्रमुखरैः स्वार्थैकमात्रव्रतै-
र्भूलोके जनतन्त्ररक्षकब्रुवैर्निर्लज्जपापेप्सितैः ।
उत्सर्गीकृतभीषणास्त्रनिवहैः सन्दीप्तयुद्धज्वरै-
र्युष्माभिर्मरणोन्मुखैर्भरतभूर्नूनं चतुर्लङ्घिता ।। २ ।।

सर्वोत्कृष्टमतैः स्वयं जनतया निर्वाचने स्वीकृतो
वङ्गानां ननु कण्ठहारसदृशो लोकप्रियो नायकः ।
बद्धः शेखमुजीबनाममुखरः स्वायत्ततायाचको
हत्याघातविलुण्ठनादिविकटं चक्रं ततश्चालितम् ।। ३ ।।

पाकिस्तानमदान्धशासकगणैः सोनारबाङलाभुवि
मानुष्योज्ज्वलभव्यभालकलुषं पादोनसंवत्सरे !
यत्तीव्रोग्रनृशंसदारुणतमं हृत्कम्पकृच्चेष्टितं
तत्तैमूर-हलाकु-नादिरशहा-नाझीनपि ह्रेपयेत् ।। ४ ।।

त्रिंशल्लक्षमिता जना अकरुणं व्यापादिता निष्ठुरैः
प्राचार्या भिषजो विधिज्ञमुखरा धीमत्तमाः पण्डिताः ।
तत्तच्छास्त्रकलादिकोविदजना बुद्धया रहो घातिताः
वासोत्पाटितकोटिसङ्ख्यकजना निर्वासिता भारते ।। ५ ।।

नार्यो वृद्धजनास्तथैव शिशवो नावेक्षिता राक्षसै-
रत्याचारपरायणैरगणिता वामा बलाद् धर्षिताः ।
बाङ्गलावंशसमूलनाशनधिया यत् क्रूरपाकैः कृतं
नूनं तस्य तुलैवनास्ति भुवने भूते भविष्येऽपि वा ।। ६ ।।

बाङ्ग्लाबन्धुमुजीबनायकवरे कारानिबद्धे सति
बाङ्ग्लावीरजनैर्विमुक्तिसमरः प्राणान्तिकश्चालितः ।
चीनामेरिकनादिशस्त्रसहिता पाकीयसेनैकतः
स्वातन्त्र्यानलदीप्तहेतिरहिता बाङ्ग्लाचमूरन्यतः ।। ७ ।।

बाङ्ग्लादेशविमुक्तिभीषणरणः पादोनवर्षात्मकः
काले गच्छति भारतोपकृतिवशादापन्महातीव्रताम् ।
सन्नद्धाऽपि भयङ्करास्त्रनिचयैः पाकस्य क्रीता चमूः
सर्वस्वाहुतमुक्तिसैनिकगणैः संस्तम्भमापादिता ।। ८ ।।

सर्वस्वापहृतैककोटिजनतानिर्वासनाद् भारते
ह्यादावेव शमप्रधानविषये ह्यारोपयद्भूर्युधम् ।
बाङ्ग्लामुक्तिरणार्तपाकमुखरैराक्रान्तमात्मान्तकै-
र्वर्षे विंशशतैकसप्ततितमे तार्तीयडीसेम्बरे ।। ९ ।।

दिल्ल्या दूरगते प्रधानसचिवे रक्षाप्रधानेऽपि च
वङ्गे भग्नबलैर्निराशविफलैः पाकैर्विपाकोन्मुखैः ।
अस्मद्द्वादशवायवीयपृतनाकेन्द्राण्यकस्मादहो
सीमान्ते प्रहतानि युद्धमपि च प्रख्यापितं वञ्चकैः ।।१०।।

तस्मिन्नेव दिने प्रधानसचिवैर्दिल्ल्या निशीथे कृत-
माह्वानं सहसा निशम्य विषयो युद्धाय सज्जोऽभवत् ।
आदिष्टं त्रिविधं बलं च युगपद् ह्याक्रामकोच्छित्तये
विध्वस्तानि च शत्रुसैन्यशिबिराण्यस्मद्विमानैः क्षणात् ।। ११ ।।

देशोऽयं मम मातृभूरिति मया त्याज्यास्तदर्थासव
इत्युत्स्फूर्तरणप्रयाणकुशलैस्त्रैलोक्यलब्धप्रथैः ।
अस्मद्वीरभटैः स्वदेशघटितैः साधारणैरायुधैः
सन्नद्धाऽपि समग्रशस्त्रनिवहैः पाकस्य छिन्ना चमूः ॥१२॥

शब्दातीत-मिराज-सेबरजटैरग्न्यस्त्रसंवर्षकैः
पेटन्टेङ्कनिभैश्च सेञ्चुरिसमैः साङ्ग्रामिकैः स्यन्दनैः ।
अन्यान्यैश्च बलाढ्यराष्ट्रनिवहाद् भैक्ष्येण लब्धायुधैः
सन्नद्धाऽपि हि पाकभाटकचमूर्भीता रणाद्विद्रुता ॥ १३ ॥

टेङ्काः पेटनसन्निभाः सुविदिता ध्वस्ता यथा मृच्चया
अत्युत्कृष्टतमाश्च सेबरजटाः सम्पातिताः श्येनवत् ।
शस्त्रं नैव युधं करोति समरे किन्तु प्रकोष्ठो दृढो
नूनं स्वार्थपरायणैर्भृतिभटैर्युद्धं न सञ्जीयते ॥ १४ ॥

साहस्त्राब्दिकदीर्घसङ्गरकथाजुट्पाकवीरब्रुवै-
र्युद्धं कर्तुमलं न वीरपरमैर्होरासहस्त्रं ह्यपि ।
सप्ताहद्वयमात्र एव शरणं त्रस्ता प्रपन्ना भयाद्
वङ्गे त्वात्मसमर्पणं च विहितं लक्षेण योधैः समम् ॥ १५ ॥

अत्याचारपरायणैरतितरां निर्मानुषैर्निष्ठुरैः
सत्तोन्मत्तनिरङ्कुशाधिपहतैरुत्पीडकै राजकैः ।
निर्दुष्टैरनियन्त्रिताधिकृतिभिर्याह्योपमैः शासकै-
र्युद्धं नैव जितं न जेतुमलमस्तीत्येव सिद्धं पुनः ॥ १६ ॥

हिंसावैरविरोधकुत्सनघृणामूलं विदुष्टाशयं
हिन्दूभारतवर्षधर्षणधिया पापाशयैः सङ्गतम् ।
वैरं नाम हि भारतेन सततं यस्याभवद् वाञ्छितं
पाकिस्तानमदान्धराष्ट्रहतकं भिन्नं द्विधा खण्डितम् ॥ १७ ॥

सीमान्ते च महान् सुहृज्जनपदो जातो ह्युदीच्ये नवो
बाङ्गलाख्यो जनतन्त्रभावभरितो धर्मान्धतावर्जितः ।
धर्माधिष्ठितराज्यकल्पनमपि ध्वस्तं दिवास्वप्नवत्
सिद्धान्तोऽपि च राष्ट्रखण्डणकरो राष्ट्रद्वयाख्यो हतः॥१८॥

सङ्ग्रामा बहुधा बहुत्र विहिताः स्वार्थाय भूशासकै-
र्दास्याबद्धजनस्य मोचनकृते नूनं कृतो दुर्लभः ।
त्रेतायां प्रभुरामचन्द्रविहितो लङ्काविमुक्ते रणः
श्रीमत्येन्दिरया पुनः कलियुगे बाङ्लाविमुक्त्यै कृतः ॥ १९ ॥

हिन्दूमुस्लिमधर्मबान्धवजना भिन्नं हि राष्ट्रद्वय-
मित्यत्यन्तविषाक्ततत्त्वजनितं चेस्लामधर्मानुगैः ।
सौख्यं स्यादिति पञ्चविंशतिसमापूर्वं स्वयं स्वीकृतं
तैरेवाद्य सधर्मबान्धववधं पाकं स्वयं नाशितम् ॥ २० ॥

अम्रीकागणतन्त्रनिर्मलयशो लोके चिराद्विश्रुतं
नूनं निक्सननामराष्ट्रपतिभिः स्वाचारकृष्णीकृतम् ।
निःसङ्ख्यानघवङ्गघोरवधिकान् निस्त्रिंशपाकाधिपान्
शस्त्रास्त्रैरतिभीषणैरनुदिनं सन्नाहयद्भिः खलु ॥ २१ ॥

निर्भर्त्स्या खलु भूमिका हि समरे भात्यम्रिकाया भृशं
वङ्गे घोरनृशंसमानववधं दृष्ट्वाऽपि तूष्णीं स्थितैः ।
"एण्टरप्रायिज"नाम भीमतरणिः संप्रेषितः सज्जितो
ढाक्कायामवरुद्धनागरजनत्राणापदेशाच्छठैः ॥ २२ ॥

त्रिंशल्लक्षनिरीहवङ्गजनतानिर्मानुषोत्पाटन-
मम्रीकाजनतन्त्रराष्ट्रपतिभिर्दृष्ट्वाऽपि वाचंयमैः ।
अस्माभिः प्रतिरोधमात्रविहिते पाके च भङ्गोन्मुखे
सङ्ग्रामोपशमो भवेदिति रुतं संयुक्तराष्ट्रे कृतम् ॥ २३ ॥

सङ्घर्षाद्विरता भवन्तु विषया इत्येव संस्थापिता

'यूनो' नाम समस्तराष्ट्रपरिषत् साऽप्येडमूकाऽभवत् ।
इत्थं चेद् वृतिरेव खादति कृषिं तोयं च संप्लुष्यति
शान्तिर्नाम कथं भविष्यति भवे नूनं विचार्यं बुधैः ॥२४॥

१-१-७२

## वेदलहरी

निसर्गादौ लीलाजनितजगदाधारविधिना
जगत्कल्याणार्थं परमकरुणापूर्णमतिना ।
मुनीनामाद्यानां विमलहृदयेषु प्रकटितं
श्रुतेर्नाम्ना ख्यातं जयति भुवने ज्ञानममरम् ॥ १ ॥

सुधास्यन्दिस्रोतः सकलवसुधाधर्मसरितां
जगत्तत्त्वज्ञानप्रमुखजननस्थानमजरम् ।
निधानं विद्यानां जगति निखिलानामनुपमं
जगत्क्षेमं तन्वञ् जयति भुवने ज्ञानहिमवान् ॥ २ ॥

निराशङ्कं पूर्णं विविधमतवादैर्विरहितं
परब्रह्मज्ञानं स्खलितरहितं मङ्गलमयम् ।
अखण्डं सौभ्रात्रं जगति मनुजानामुपदिशत्
त्रिकालाबाधं सज् जयति भुवने ज्ञानममरम् ॥ ३ ॥

स्फुरज्ज्ञानज्योतिःप्रखरकिरणैश्चण्डपतनै-
र्निराकृत्य ध्वान्तं दिशि दिशि ततं मोहजनितम् ।
महाबोधाभावाविरलतिमिरे मग्नमखिलं
विरक्षन् संसारं जयति भगवान् वेदतपनः ॥ ४ ॥

त्रिलोकीं सन्तप्तां त्रिविधभवतापाग्निघृणिना
निदाघोष्मातप्ताञ् जलद इव वृष्टया भुवि जनान् ।
लसद्भिर्ज्ञानोस्त्रैर्मृदुलसुखदैश्चामृतमयैः
परां शान्तिं नेष्यन् श्रुतिशिशिरकान्तिर्विजयते ॥ ५ ॥

महामायाऽऽवर्ते विषयमदकामोग्रमकरे
गभीरे दुःखाब्धौ निपतितजनानां सकरुणम् ।
कृपादृष्टया युक्ता भयहरणदक्षा भगवती
समुद्धर्त्री भूयान्निगमतरणिर्लोकरतये ॥ ६ ॥

गिराधर्माकल्पादिकसमवृथाक्षुद्रकलहे
भृशं व्यासक्तस्य व्यथितजगतः स्नेहभरितम् ।
समादेशं दत्वा भुवनमनुजैक्यस्य महतः
समुद्धर्ता वेदो जयति भुवने ज्ञाननिकरः ॥ ७ ॥

सुकर्मज्ञानोपासनविषयिणीं व्याप्तविमतिं
शमं नीत्वा लोके त्रिविधभवतापं परिहरन् ।
समष्टिव्यष्टयोर्यो मधुरतरमैक्यं च जनयं-
स्त्रयीविद्याकोषो भुवनहितदक्षो विजयते ॥ ८ ॥

जगद्व्याधेर्मूलं भवति जडमूर्त्यर्चनमिद-
मतोऽनन्तानादेरनुपमजगद्व्यापकविभोः ।
निराकारस्यैव प्रयतमनसा पूजनमसौ
समाघोषन्नुच्चैर्जयति भुवने ज्ञानजलधिः ॥ ९ ॥

महाशक्त्या व्याप्तं भवति भुवनं चापि रचित-
मतो भोग्यं सर्वं भवति मनुजैस्त्यागसहितम् ।
धनं कस्य स्विद भो इति निगमयन् वेदभगवान्
समाधत्ते सम्यग् जगति विषमं स्वत्वकलहम् ॥ १० ॥

नरास्तुल्याः सर्वे जननकृतवैषम्यरहिता
मिथः सौहार्दं तत्सहजरमणीयं भवतु वः ।
समानो वो मन्त्रो भवतु समितिश्चापि हि समा
प्रशास्त्येवं स्नेहाच्छ्रुतिभगवती मानवगणम् ॥ ११ ॥

विशेषो वेदानामितरमतशास्त्राद्भवति यद्
यथातथ्यं वेदा भुवननियमानामनुगुणाः ।
तथा तर्कोपेता अपिच नवविज्ञानसहिताः
परं दूरा अन्ये क्वचन विपरीता अपि बहु ॥ १२ ॥

परेशज्ञानत्वं सकलनिगमैः शास्त्रनिवहैः
समुद्घुष्टं येषां प्रयतमुनिवृन्दैश्च सकलैः ।
महाज्ञानोत्सत्वं ह्यपि च सकलैरभ्युपगतं
जगत्सौख्यार्थं तान् श्रयत मनुजा ज्ञाननिचयान् ॥ १३ ॥

अनेकैः पाश्चात्यैर्निखिलनिगमाधीतिपरमैः
कजीन्स् हीरेनादिप्रवरपुरुषैर्मुक्तहृदयैः ।
卐 "महाज्योतिस्स्तम्भा" "मनुजसुखशान्त्युत्स" इति यत्
महत्त्वं वेदानामितरमतशास्त्रात्प्रकटितम् ॥ १४ ॥

वदन्त्येके ख्रिस्तं शरणमभिगन्तुं भुवि जनान्
तथैवाहुः केचिद् वरितुमपरे मोहम्मदमतम् ।
महावीरं बुद्धं व्रजत शरणं चेत्थमितरे
परं वेदादेशो भवत मनुजाः केवलमिति ॥ १५ ॥

---

卐 'Path to peace' by Dr. James Cousins Page 60
'Historical researches' by Prof. Heeren vol II Page 127

घृणाहिंसामर्षप्रतिभयमहादावदहने
स्थिरां शान्ति विश्वे विविधमतवादैः कलहिते ।
वयं वाञ्छामश्चेत् सुदृढतमभित्तौ रचयितुं
तदा नान्यः पन्था श्रुतिगदितमार्गानुसरणात् ।। १६ ।।

१२-८-८६

## दयानन्दलहरी

जगद्वन्द्यं धन्यं धवलयशसा मण्डितभुवं
श्रुतीनामावासं त्रिभुवनगुरुं पण्डितवरम् ।
जगत्कल्याणार्थं क्षपितनिजसौख्यं यतिवरं
दयानन्दं वन्दे सकलभुवनानन्दभवनम् ।। १ ।।

परित्यक्तं येन प्रियतमजनिप्रेम विपुलं
गृहीतं तारुण्ये मुनिजनकठोरं व्रतमहो ।
परिभ्रान्तं घोरं विपिनमशनावासरहितं
दयानन्दं वन्दे कमपि जगदानन्दनविधुम् ।। २ ।।

चरन् यावज्जीवं कठिनतरवर्णिव्रतमपि
महामायापाशानपि शकलयन् धीरधिषणः ।
त्यजन् कृत्स्नाँल्लोभान् मनुजसुलभान् विश्वरतये
दयानन्दो वन्द्यः सकलजगदानन्दजननः ।। ३ ।।

प्रलोभा यं नालं विपुलविषयाणां चलयितुं
विपक्षाणां भीमं बलमपि न शक्तं व्यथयितुम् ।
भयं प्राणानां यं विरतमकरोन्नात्मसरणे-
र्दयानन्दो धन्यो जगति खलु निर्भीकपरमः ।। ४ ।।

स्वकीयार्षप्रज्ञाप्रवरतमदिव्योज्ज्वलकरैः

निगूढं वेदार्थं विविधमतवादाभ्रतिमिरैः ।
चिरात् स्पष्टीकुर्वन् प्रभुवरकृतीनामनुगुणं
दयानन्दादित्यो लसति भुवने चण्डतपनः ॥ ५ ॥

अविद्यान्धध्वान्तप्रजनितमहामोहदुरितं
तथा पाखण्डानां दिशि दिशि निमूर्छद् घनतमः ।
शमं नेष्यन् सद्यो निजनिगमबोधामृतकरै-
र्दयानन्दाख्योऽयं लसति गगने वैदिकरविः ॥ ६ ॥

प्रतप्तं संसारं त्रिविधभवतापैरतितरां
निदाघोष्मातप्ताञ् जलद इव वृष्ट्या भुवि जनान् ।
सुधासारोत्कृष्टैर्निजसदुपदेशामृतकणैः
परां शान्तिं नेष्यञ् जयति स दयानन्दभपतिः ॥ ७ ॥

भवाम्भोधौ भीमे विषयमदकामोग्रमकरे
महामायावर्ते निपतितजनानां सकरुणम् ।
समुद्धर्ता देवो निजविमलबोधामृतकरै-
र्दयानन्दो वन्द्यः सकलजगदानन्दजननः ॥ ८ ॥

जगत्सर्गाधारप्रलयजननं व्यापकविभुं
चिदानन्दं त्यक्त्वा विविधजडमूर्त्यर्चनमिदम् ।
निदानं दुःखानां भवति मनुजानामिति बुधो
निरस्यन् मूर्त्यर्चां जयति स दयानन्दयतिराट् ॥ ९ ॥

शुभे कार्ये यज्ञाध्वरमखसमाख्येऽबुधजनैः
पशूनां मूकानां निगमवचसाऽनुष्ठितवधम् ।
निरस्यैशं सत्यं यजनभजनादीनुपदिशन्
दयानन्दाचार्यो भवति भुवने नूनमतुलः ॥ १० ॥

सहस्राब्दाल्लुप्तं त्रिविधनिगमार्थं प्रकटयन्
ददत् स्त्रीशूद्रेभ्यो निखिलनिगमानामधिकृतिम् ।
समालिङ्गन् म्लेच्छानपि च पतितोद्धारपरमो
दयानन्दाचार्यो भवति परमोदारहृदयः ॥ ११ ॥

गुणाचारस्थाने जननकृतवर्णान् परिहरन्
सरिद्वापीस्थाने जनकगुरुतीर्थान् प्रकटयन् ।
गतप्राणश्राद्धं प्रबलतमयुक्त्या वितथयन्
दयानन्दाचार्यो जयति भुवने नूनमतुलः ॥ १२ ॥

गृहीत्वा स्वातन्त्र्याध्वरकठिनदीक्षामपि शुभां
स्वराज्योद्घोषं यः प्रथममकरोद्भारतभुवि ।
नृपान् निद्राधीनानकुरुत विनिद्रान् स्ववचसा
दयानन्दो वन्द्यो भरतजननीमस्तकमणिः ॥ १३ ॥

निजोत्कृष्टां त्यक्त्वा भुवनमहितां संस्कृतिवरां
प्रतीच्यानां भासा प्रतिहतदृशो भारतजनान् ।
विधायात्माध्मातान् स्वगतमहिमापूर्णहृदयान्
स्वराज्यं संरक्षन् जयति स दयानन्दयतिराट् ॥ १४ ॥

अनाथानां नाथः पतितदलितानां सुखयिता
शरण्यो दीनानां परमकरुणापूर्णहृदयः ।
परित्राता गोस्त्रीविधुरविधवानां भुवि महान्
दयानन्दो वन्द्यो भवति शतशो मानवगणैः ॥ १५ ॥

अरातिर्दुःखानां दुरितकलुषाणां शमयिता
विनेता दुष्टानां पिशुनकितवानां दमयिता ।
दुराचारोच्छेत्ता भुवनभयहर्ता मुनिवरो
दयानन्दो वन्द्यो भवति शतशो मानवगणैः ॥ १६ ॥

निराधाराऽधारः प्रसृतमधुधारामृतधरो
निरानन्दानन्दो भुवनसुखकन्दो यतिवरः ।
पिबन् वारं वारं गरलमपि घोरं शिवतरो
दयानन्दो वन्द्यो भवति शतशो मानवगणैः ।। १७ ।।

अविद्यानां हन्ता त्रिविधभवसन्तापशमनः
श्रुतीनामुद्धर्ता पददलितदुःखार्तशरणम् ।
विपन्नानां गोप्ता सकलशुभकल्याणकरणो
दयानन्दो वन्द्यो भवति शतशो मानवगणैः ।। १८ ।।

दृढा भक्तिर्वेदे निरतिशयनिष्ठा गुरुवरे
प्रकाण्डं पाण्डित्यं प्रखरतममेधासमुदयः ।
तपस्त्यागादर्शः परमकरुणापूर्णहृदयं
दयानन्दस्वामी भवति गुणरत्नैकजलधिः ।। १९ ।।

असामान्यो नेता कुशलतमवक्ता यतिवरो
विदग्धो वादीन्द्रो विजितबहुविद्वन्नरवरः ।
मनस्वी वर्चस्वी व्रतिवरतपस्वी बुधवरो
दयानन्दस्वामी भवति गुणरत्नैकजलधिः ।। २० ।।

हिमाद्रिः प्रोत्तुङ्गो ह्यपि लघुतमो यस्य पुरतो
गभीरापारोऽसौ जलधिरपि गाधो घनतया ।
दिशः सर्वाः खर्वा विपुलगगनं वामनतमं
दयानन्दो नूनं ह्यतुलमहनीयो भुवि महान् ।। २१ ।।

क्षमाशान्त्यौदार्यप्रचुरगुणरत्नैकजलधिः
सहिष्णुत्वाक्रोधप्रशमविनयानां प्रतिकृतिः ।
महाझञ्झावाताविचलचरणापूर्वमतिमान्
दयानन्दो नूनं ह्यतुलमहनीयो भुवि महान् ।। २२ ।।

यदीयाविर्भावादवनिमुखमुद्भासितमभूत्
प्रसन्नाः सर्वाशा विविधशुभकर्माञ्चिततराः ।
अविद्यान्धध्वान्तं प्रसभमभवत्खण्डिततरं
महापाखण्डानां दलनभगवत् सत्यमुदयात् ।। २३ ।।

निरस्तं पाखण्डैः श्रुतिरविकराच्छादनपरै-
स्तिरोभूतं भावैर्विघटनपरैः शान्तमशुभैः ।
दुराचारैर्दग्धं ज्वलितमनुदाराशयमतै-
र्विधर्माणां नष्टं कुटिलतमचक्रैर्यदुदयात् ।। २४ ।।

प्रसारं वेदानां दिशि दिशि विधातुं व्रतिवरो
विशाले मुम्बाख्ये भुवनविदिते भारतपुरे ।
समाभ्योऽसौ पूर्वं व्यरचयदतोऽष्टाधिकशतात्
समाजं ह्यार्याणां सकलवसुधाऽऽस्तीर्णविपटम् ।। २५ ।।

श्रुतीनां सत्यार्थप्रवचनपरं भाष्यमतुलं
तथा सत्यार्थानां प्रकटनपटुं ग्रन्थपरमम् ।
विधिं संस्काराणां मनुजवरनिर्माणकरणं
दयानन्दाचार्यो भुवनहितबुद्धया व्यरचयत् ।। २६ ।।

विवादे यच्छ्रेष्ठं श्रुतिनिगमपाण्डित्यमतुलं
प्रभुत्वं गैर्वाण्यामनितरसमं चैव विपुलम् ।
विलोक्याजौ भीत्या बुधवरकदम्बैरपसृतं
दयानन्दं वन्दे भुवनतिलकं पाण्डितवरम् ।। २७ ।।

१०-१०-७३

# विवेकानन्दलहरी

त्रिलोकीकल्याणास्पदभरतभूधर्मसरितः
परं पूतं दिव्यं सकलवसुधामङ्गलकृतम् ।
प्रवाहं पातालं पुनरपि नयन् दिव्यपुरुषो
विवेकानन्दाख्यो जयति भुवने विश्वयतिराट् ।। १ ।।

प्रकृष्टान्तेवासी खलु परमहंसस्य यमिनः
प्रवक्ता संस्कृत्याः प्रखरतमधीर्भारतभुवः ।
प्रदूतो धर्मस्य प्रवरचरितस्य प्रतिकृति-
र्विवेकानन्दाख्यो जयति भुवने विश्वयतिराट् ।। २ ।।

जगन्मिथ्यावादप्रजनितनिवृत्त्यन्धतमसं
निरस्यात्मज्ञानप्रखरतमदिव्योस्त्रनिकरैः ।
प्रवृत्तेः पन्थानं पुनरुपदिशन् भारतजनान्
विवेकानन्दाख्यो जयति भुवने ज्ञानतरणिः ।। ३ ।।

अनासक्तं कर्म प्रततमिह कार्यं भुवि नरै-
रितीमं राद्धान्तं निगमगदितं विस्मृतमसौ ।
पुनर्लोकान् शासत्परममहनीयं स्वकृतिना
विवेकानन्दाख्यो जयति भुवने वैदिकयतिः ।। ४ ।।

उदग्रं तज्ज्ञानं श्रुतिनिगमशास्त्रैर्निगदितं
कलाकौशल्यं तद् भुवि विदितमैतिह्यमपि तत् ।
उदात्तं साहित्यं जगति महितां संस्कृतिवरां
तिरस्कृत्याशेषं परविषयदास्यं विदधतः ।। ५ ।।

स्वयं मूढान् हीनान् परमलघुदीनान् गणयतो
युरोपीयान् विज्ञानपि च वरणीयान् विमृशतः ।
प्रतीच्यानां भासा प्रतिहतदृशो भ्रान्तमनस-
स्तदीयां चोत्तुङ्गां प्रकृतिपरमामुन्नतिमिह ।। ६ ।।

विलोक्यान्धीभूतान् भरतजननेतॄन् यतिवरः
प्रदर्श्यात्मैतिह्यं रुचिरतररूपं च परमम् ।
निरुन्धन् निष्यन्दं प्रबलतममोहान्धसरितो
विवेकानन्दोऽभूदमितधृतिधामाद्रिपरमः ।।७।। (इति विशेषकं)

समृद्धाम्रीकायाः सुविदितशिकागोऽभिधपुरे
प्रसिद्धायां तस्यां सकलजगतो धर्मसदसि ।
प्रयातोऽस्मद्धर्मप्रतिनिधिवरत्वेन सुभगो
रराजासौ तस्यां सुरसदसि वाचस्पतिरिव ।। ८ ।।

प्रिया भोः ! सोदर्याः प्रियतमभगिन्यश्च महिता
इतीदं तद्धीरं मधुरतरसम्बोधनमहो ! ।
परं हर्षं याताः श्रवणसमकालं बुधवराः
ह्यभूत्सा सम्बुद्धिः सकलजनसौभ्रात्रजनका ।। ९ ।।

स्वकीयौजस्विन्या मधुमयसुधास्यन्दिगिरया
स्वधर्मं व्याचक्रे सरसरमणीयं सुललितम् ।
यतः सर्वे मुग्धाः स्वमतगुरुतां सन्दिदिहिरे
विवेकानन्दोऽभूत् सकलजनकौतूहलखनिः ।। १० ।।

अपूर्वं वक्तृत्वं श्रुतिनिगमपाण्डित्यमतुलं
प्रभापुञ्जो देहो रुचिररमणीयं च वचनम् ।
निशम्यैतत्सर्वं भुजग इव मन्त्रेण विहता
बलादङ्गीचक्रुः खलु भरतभूगौरवमिमे ।। ११ ।।

विलोक्यास्य प्रज्ञामविकलमतां वाक्चतुरतां
समुद्घुष्टं पत्रैरपि च कथितं पण्डितवरैः ।
" विवेकानन्दोऽभूत् सकलबुधमूर्धन्यमतिमान्
महामौर्ख्यं नूनं भरतजनसम्बोधनकथा " ।। १२ ।।

सुधासारोत्कृष्टं मधुरतरधर्मप्रवचनं
जनाः श्रावंश्रावं मुदितहृदयान्ताः समभवन् ।
असंख्येभ्यो दत्वा निगममतदीक्षां बुधवरः
स्वदेशं संप्राप्तो विजितककुभः शङ्कर इव ।। १३ ।।

वयं दायादाः स्मः प्रतनतमधर्मस्य जगति
यदा यूयं बाल्ये वयसि नितरां धर्मविषये ।
तदाऽध्यात्मज्ञाने जरठजरठा आस्म भुवने
ह्यतो धर्मस्यास्मद्वितरणकथैवास्ति वितथा ।। १४ ।।

भवद्भिर्नो धर्मः खलु वितरणीयो न सुहृदो
वयं धर्मक्षेत्रे परिणततमा धीरपरमाः ।
अतो देयोऽस्मभ्यं विघसवसनाद्यर्थनिचयो
जगादेत्थं धीरः सदसि समवेतान् बुधवरान् ।। १५ ।।

स्वदेशं सम्प्राप्तो धवलयशसाऽऽमण्डितजगत्
समुद्गीतालोकैर्विहितसुमवर्षैः प्रतिपुरम् ।
जनैः प्रत्युद्यातः परममुदितोत्साहभरितैः
प्रतिस्थानं नूनं क्षुधितनयनापीत इव सः ।। १६ ।।

ततो वात्याचक्रभ्रमणमकरोद्भारतभुवः
स्वकीयोजःपूर्णप्रवचनसमालापलिखितैः ।
स्वदेशीयान् कुर्वन् विदितनिजकर्तव्यनिकरान्
तथा स्वत्वाऽऽध्मातान् स्वगतमहिमापूर्णहृदयान् ।। १७ ।।

बलिष्ठा ओजिष्ठा भवत सुहृदो वज्रकठिनाः
महावीर्याः शूरा विजितमरणा धूर्जटिरिव ।
नहि प्राप्यं श्रेयो भवति बलहीनैर्भुवि नरै-
रितीयं तच्छास्तिः सकलजनकल्याणजनका ।। १८ ।।

परित्यज्य क्षुद्रा विविधमतजात्यादिकभिदाः
सहोदर्याः सन्तो भवत शुभसङ्कल्पभरिताः ।
मिलित्वा सेवध्वं भरतजननीमेव सुधियो
विना शक्तेर्मुक्तिर्नहि भवति जानीत सुहृदः ।। १९ ।।

वनं गत्वा घोरं गिरिवरगुहागह्वरमपि
निरोधात्प्राणानामपि च वपुषः क्षीणकरणात् ।
नहि स्यान्मुक्तिर्वो जननशतकेऽपि प्रियजनाः
भवेन्नूनं सैव व्यथितजनसेवादिकरणात् ।। २० ।।

क्रियाकाण्डे धर्मो नहि भवति भक्त्या विरहिते
तथा नैवास्त्याडम्बरसहितयज्ञादिकरणे ।
परा शक्तेर्ध्यानं प्रयतमनसा भावनमिह
परं धर्मं मेने श्रुतिनिगमशास्त्रैर्निगदितम् ।। २१ ।।

नहि म्लेच्छस्पर्शादपि न सहपानान्नग्रहणाद्
न वा धर्मोच्छेदो जलधितरणान्नूनमिह नः ।
भवेत्पापाचारादनृतवचनाच्चापहरणा-
दिति स्पष्टीचक्रे निगमवरधर्मं स्वकृतिभिः ।। २२ ।।

निरोधो धर्मस्यावरजनगणाद् ब्राह्मणजनै-
र्निमित्तं ह्रासानाममितजनदुःखार्तिजननम् ।
अतः प्रायश्चित्तं भवति करणीयं द्विजवरै-
र्बिदेशेत्थं शुद्धिं भुजगगरलस्येव भुजगैः ।। २३ ।।

धमन्यां हिन्दूनां नवरुधिरसञ्चारकरणं
प्रवेष्टास्थ्नां तेषां कठिनतरलोहेन घटनम् ।
शिरास्नायूनां च प्रबलतमवज्रेण रचनं
विवेकानन्दानां हृदयगतसाध्यं समभवत् ॥ २४ ॥

प्रचण्डं विज्ञानं यदि भवति धर्मेण रहितं
क्षणे ध्वस्तं कुर्यान्मनुजवरनिर्माणपरमम् ।
विनाशः संस्कृत्या अपि च जगतो निश्चितमिह
ह्यतः शक्त्या भाव्यं विमलतमभक्त्या च सहितम् ॥ २५ ॥

भवत्यन्धं ज्ञानं मनुजवरधर्मेण रहितं
तथा पङ्गुर्धर्मो भुवनवरविज्ञानविगतः ।
परं संयुक्तौ तौ कुशलमिह कर्तुं प्रभवतः
प्रयात्यन्धारूढः परमविकलाङ्गोऽपि परतः ॥ २६ ॥

प्रतीची निर्विण्णा धनकनकपूर्णाऽपि नितरा-
मसम्पन्ना प्राची यदपि सुतरां भक्तिभरिता ।
तयोर्योगः श्रेयानपिच सुखकारी विनिमयो
द्वयोस्तेषामिष्टं मिलनमभवद् ध्येयपरमम् ॥ २७ ॥

समुत्कर्षो दैव्या मनुजहृदये संपद इह
क्षयः साकल्येनासुरगणवृतायाश्च सहसा ।
विचाराचाराभ्यां मनुजपरिपूतत्वमिति यद्
विवेकानन्दार्यो मनुजवरधर्मं निरदिशत् ॥ २८ ॥

प्रदीप्तं नक्षत्रं निखिलवसुधाधर्मगगने
महाझञ्झावातः कुटिलमतवादाभ्रहरणे ।
प्रचण्डः पञ्चास्यो गहनतमवेदान्तविपिने
विवेकानन्दोऽभूदतुलमहनीयो यतिवरः ॥ २९ ॥

महाघोरैरीशुमसिहजनकृत्यैः प्रशमितं
प्रतीच्यानां शान्तं भरतजननिन्दामयकृतैः ।
स्वदेशीयैर्जातं प्रियभरतभूगौरवयुतैः
शुभोदर्कैः कार्यैरुदितमतिपुण्यैर्यदुदयात् ।। ३० ।।

विधूयोच्चैः केतुं भुवनगगने भारतभुवः
पुराण्याः संस्कृत्याः सकलवसुधामङ्गलकृतः ।
पुनस्तन्वन् भूमौ प्रियभरतभूधर्मविजयं
विवेकानन्दोऽभूद् भरतजननीमस्तकमणिः ।। ३१ ।।

प्रभालिप्तं यावद् गगनमिह चन्द्रार्कभगणै-
र्महीपृष्टं यावद् गिरिवरसरिद्भिश्च लसितम् ।
स्थितिर्नूनं यावद् भवति भुवने भारतभुवो
भवेत्तावत्स्मार्यो भरतजनवृन्दैः स सुभगः ।। ३२ ।।

१-१-८५

---

# गान्धिलहरी

चतुर्दिग्विस्तीर्णं प्रबलतमसाम्राज्यमतुलं
प्रयातुं यत्रास्तं रविरपि न शक्तो भुवि महान् ।
दधर्षैकः कृत्स्नं विगतभयशङ्कश्च सफलं
महात्माऽसौ गान्धी जयति भुवने विश्रुतयशाः ॥ १ ॥

तदीयास्थिप्राये पिशितरहिते क्षीणवपुषि
महानूर्जस्व्यात्मा कुलिशकठिनो नूनमवसत् ।
बभूवाग्रे यस्य प्रबलतमसाम्राज्यमपि तत्
पराभूतं शीर्णं व्यलुठदवनौ बुद्बुद इव ॥ २ ॥

महाशक्त्याऽऽध्मातप्रबलतमसाम्राज्यदलित-
युरोपाफ्रेशान्तर्गतजनपदेभ्यः सविनयम् ।
अपूर्वं निःशस्त्रप्रतिकृतिविधानं ह्युपदिशन्
महात्मा पुण्यात्मा जयति भुवने नूनमतुलः ॥ ३ ॥

कियन्तो नो जाता जगति महनीया नरवराः
कियद्भिर्नो दृष्टं सुविदितहरिश्चन्द्रचरितम् ।
पटे वा नालोकि श्रवणचरितं बाल्यवयसि
परं धन्यो गान्धी जगति समभूत्सत्यपरमः ॥ ४ ॥

प्रयान्त्याङ्गलं देशं नयविनयहेतोर्बहुजना-
स्तिरस्कुर्वन्त्यात्मप्रयतकुलधर्मांश्च सहसा ।
परं धन्यो गान्धी स्वकुलनियमात् मातृवचनाद्
ररक्षासौ सम्यक् परममहनीयश्च समभूत् ॥ ५ ॥

यतो मद्देशीया विभवरहिता दीनजनता
नयत्यात्मायुर्वै कथमपि महत्कृच्छ्रसहितम् ।
ततो नित्यं स्थास्याम्यहमपि च कौपीनवसनो
व्रतं कृच्छ्रं ह्याङ्ग्लाधिपतिमिलने चापि न जहौ ॥ ६ ॥

विषीयन्ते नित्यं स्खलितदुरितानीह सकलैः
स्वभावो ह्येवायं स्खलनसुलभानां तनुभृताम् ।
परं तत्स्वीकारो नयति मनुजानुच्चपदवीं
रहस्यं चैतत्तत्प्रवरचरितस्यापि नियतम् ॥ ७ ॥

डचफ्रेञ्चाङ्लानां धवलवपुषां चासितहृदां
वृथा वर्चस्वं तत्प्रवरकुलगौराङ्ग/जनितम् ।
विशिष्याफ्रीकायां सविनयनयानादरसमं
विना शस्त्रं हर्ता जयति भुवि गान्धी नरवरः ॥ ८ ॥

फिरङ्ग्यत्याचारैर्व्यथितदलिते मानवगणे
त्रिलोकीकल्याणास्पदविधिवशादीशकृपया ।
विमुक्त्यर्थं पूर्वं दलितजगतो वर्षशकात्
समुद्यातः प्राच्यां द्युमणिरिव गान्धी नरमणिः ॥ ९ ॥

प्रतीच्यां वेलायां भरतविषयालङ्कृतिसमे
ह्यसौ लेभे जन्म प्रथितगुजराते जनपदे ।
शताब्दात् प्रागार्ये परमहनीये ह्यभिजने
धानाढ्ये वैश्यानां भुवि विदितपोर्बन्दरपुरे ॥ १० ॥

समाप्यासौ बाल्ये वयसि विनयं जन्मनगरे
जगामाङ्ग्लं देशं विधिविनयहेतोः स सुभगः ।
ससम्मानं लब्ध्वा विधिविषयसर्वोच्चपदवीं
स्वदेशं सम्प्राप्तः प्रखरतमदीप्ती रविरिव ॥ ११ ॥

अवाप्याफ्रीकान्तर्गतविषयमेकं विधिवशाद्
विधिज्ञः कस्यापि व्यवहरणहेतोः प्रति गतः ।
परं तत्रस्थानां ब्रिटिशसितवर्णीयजनितां
दशां कष्टां दृष्ट्वा समभवदसौ दुःखविधुरः ॥ १२ ॥

ततश्चाङ्ग्लैस्तेषां विहितदुरवस्थामतितरा-
मपाकर्तुं सत्याग्रहसविनयान्दोलनसमान् ।
समाः कृत्वा हिंसारहितसमरान् विंशतिमसौ
समायातो धन्यः परमविजयी भारतभुवम् ॥ १३ ॥

अधीयानः कष्टां परमविषमां भारतदशां
महावात्याचक्रभ्रमणमकरोद् भारतभुवः ।
मिलँल्लोकांश्चर्चामपि च विदधन्नायकवरैः
समस्यानां तेषां समुचितसमाधानविषये ॥ १४ ॥

स्वराज्यं मे जन्माधिकृतिरिति घोषं कृतवति
दिवं याते बाले प्रियभरतभूभालतिलके ।
महात्मा स्वातन्त्र्याध्वरसमरनेतृत्वमकरो-
न्महादेशस्यास्य त्रिगुणदशवर्षाणि सफलम् ॥ १५ ॥

स्वराज्यार्थं धन्यः सुखनिरभिलाषः स चिखिदे
स्वयंस्फूर्तान् सत्याग्रहसविनयानादरसमान्
समारेभे हिंसारहितशतशो वीरसमरान्
शुभोदर्कानन्ते भरतजनदास्यान्तकरणान् ॥ १६ ॥

तदाह्वानं श्रुत्वा श्रमिककृषकाश् छात्रधनिका
विधिज्ञा आयाता अधिकृतगणाश्चापि सकलाः ।
विहायात्मावासं सविनयानादररणे
जवाहरस्त्यक्त्वा कुसुमसमशय्यां प्रजवितः ॥ १७ ॥

कृतश्चम्पारण्ये कृषकजनमुक्त्यर्थसमर-
स्ततो दाण्डीयात्राऽभिधलवणसत्याग्रहरणः ।
तडित्पूर्णो देशो ननु समभवद्येन निखिलो
हतप्रज्ञाश्चाङ्गला भुवनमखिलं विस्मितमिव ॥ १८ ॥

बहिस्काराद्तस्माद् खलटविधानस्य परतो
जलीयानोद्याने विपुलनरसंहारवशतः ।
महात्मा गान्ध्याङ्ग्लप्रगुणनयनीत्यादिषु निजं
प्रसिद्धं विश्वासं प्रहतमिव मेने स सहसा ॥ १९ ॥

बहिष्कृत्याशेषं परविषयवस्तु स्वविषये
प्रयुञ्जीरन् द्रव्यं निजविषयजातं खलु जनाः ।
इति ग्रामोद्योगा विविधविषया भारतभुवि
समारब्धा हिंसारहितविकटान्दोलनतया ॥ २० ॥

ततोऽभूवन् दाहा ब्रिटिशवसनानां प्रतिपुरं
न वा कोऽप्यक्रीणात् किमपि लघु वस्त्वाङ्ग्लरचितम् ।
जडीभूतं मूढं भ्रमितमिव राज्यं प्रतिहतं
व्यधादत्याचाराननघजनतायामकरुणम् ॥ २१ ॥

स्वदेशस्वातन्त्र्याध्वरकठिनदीक्षाव्रतधरै-
रसङ्ख्यातैर्लोकैः प्रियभरतवर्षप्रणयिभिः ।
"कुरुध्वं देहं वा त्यजत" ननु भो भ्रातर इति
तदादेशाच्चक्रे ह्यतुलविपुलः सङ्गरवरः ॥ २२ ॥

मदोन्मत्तानाङ्ग्लान् भुवि विततसाम्राज्यहतकान्
जालीयानोद्यानागणितजनरक्तारुणकरान् ।
"जहीतार्यावर्तं" यदि कुशलमस्तीप्सितमरे !
इति स्पष्टं गर्जन्नतुलमहनीयो भुवि नरः ॥ २३ ॥

ततः स्वाधीनत्वप्रखरतमशातादिकरण–
स्तदाध्यक्ष्ये पूर्णः प्रियभरतभूमेश्च सहसा ।
चिरात्पादाबद्धास्त्रुटितगलिता दास्यनिगडाः
परं हा धिक् ! जाता भारतजननी खण्डिततनुः॥२४॥

सवर्णेभ्यः शूद्रान् विघटयितुकामाङ्गलकुटिलं
नयं रोध्दुं सौम्यः कठिनमुपवासं विहितवान् ।
ततः सन्धि कृत्वा दलितमुखरैः पुण्यनगरे
महात्माऽसौ हिन्दूजनतनुविभेदं स्थगितवान् ॥ २५ ॥

परं दौर्भाग्यं यत् प्रियभरतमातुर्विघटनं
निदानं पापानाममितजनतार्तिजननम् ।
अनन्तापद्धिंसाप्रभवमनघानां च हननं
निरोध्दुं न प्राभूदभवदनघश्चातिविधुरः ॥ २६ ॥

निजाभीष्टं हिन्दूयवनजनसख्यं जनयितुं
खिलाफताख्यातं भरतजनसम्बन्धरहितम् ।
अराष्ट्रीयं युद्धं यवनजनतुष्टयर्थमकरोत्
परं दूरापास्तं तदपि मृगतृष्णेव नितराम् ॥ २७ ॥

स्वदेशासक्तानां प्रियभरतवर्षप्रणयिनां
समोत्कण्ठाभाजामपि च समसौहार्दमनसाम् ।
भवत्यैक्यं सख्यं न पुनरितरेषामसदृशा–
मयस्तप्तेनेदं घटयितुमलं तप्तमयसा ॥ २८ ॥

अहो ! तत्साम्राज्यं भरतजनसामान्यहृदये
ह्यपूर्वं कौशल्यं जनसमरनेतृत्वकरणे ।
अहो ! सौहार्दं तत् सकलजनभक्तिश्च विपुला
यदीयान्नत्यागे भवति जनविद्वेषशमनम् ॥ २९ ॥

मया साभिप्रायं सकलपरिणामान् गणयता
कृतो राजद्रोहः खलु भरतवर्षप्रणयिना ।
अतो दण्ड्योऽहं भो ! कठिनतरदण्डेन सुतरा-
मिति न्यायाधीशं धृतिविनययुक्तं ह्यकथयत् ॥ ३० ॥

स्वराज्यं नो साध्यं ह्यपितु नियतं साधनमभूत्
स्वराज्ये यावद्वै भवति सजलं क्वापि नयनम् ।
नहि स्यात्तावन्नः कठिनतरसङ्ग्रामविरति-
रिति प्रोवाचासौ हृदयगतभावं बहुतरम् ॥ ३१ ॥

सुखोपेतं प्राज्यं दुरितरहितं धर्मसहितं
तदीयादर्शोऽभूद् भुवि विमलराज्यं रघुपतेः ।
क्षमासत्याहिंसाशमदमतपस्त्यागकरुणा
उपघ्नाः संस्कृत्या भवति तदवाप्तेश्च करणम् ॥३२॥

मनुष्यान्तःसुप्तं विमलतमदिव्यं गुणगणं
प्रबोध्यायं हिंसारहितपरिवर्तं जनयितुम् ।
समानेतुं च प्रायतत सुभगः स्वर्गमवनौ
यतो हि स्वर्गोऽसौ नहि भवति कुत्रापि गगने ॥ ३३ ॥

स्वराज्याप्तेरूर्ध्वं सुखजलधिमग्ने स्वविषये
द्वयोर्जात्योश्चेद्धे कलहदहने भीषणतमे
जनान् शान्तान् कुर्वन् प्रतिनयनबाष्पं परिहरन्
नवाखाल्यामेको भ्रमणमकरोच्छान्तिभूतये ॥ ३४ ॥

जना भूमौ सर्वे परमपुरुषस्यैव तनयाः
समाः सर्वे नूनं जननकृतभेदादिरहिताः ।
अतोऽस्पृश्यत्वादिप्रचलितकुरीतीः स सकला-
स्तिरश्चक्रे हिन्दूजनमलिनचिह्नं च हृतवान् ॥ ३५ ॥

चिराद् दास्यापन्नान् पददलितदीनांश्च पतितां-
स्त्रिवर्णैरस्पृष्टान् मनुजसुलभस्वत्वरहितान् ।
दयासिन्धुर्गान्धी "हरिजन" महाह्वानसहितं
समाश्लिष्यत् स्वायुःपणनसहितं धीरधिषणः ॥३६॥

स्वकीयात्मत्यागप्रणयपरिचर्याशमदम-
क्षमाशान्त्यौदार्यैर्हृदयपरिवृत्तिर्हि द्विषताम् ।
अभूत्साध्यं तेषां न तु रिपुवधो वा प्रतिकृति-
र्यतो मानुष्यं तद् भवति भुवने भावसदृशम् ॥ ३७ ॥

अमर्षक्रोधान्धाः पशव इव युद्धं विदधतो
नरा जायन्ते चेज्जगति बत भेदो भवति कः ।
मनुष्या नूनं ते खलु मननशीला जगति ये
नरैर्भाव्यं तस्मात् कलहरहितैः प्रेमसहितैः ॥ ३८ ॥

समाचर्यो धर्मः कतिपयविशिष्ठैर्भुवि नरै-
र्विशिष्टावस्थायामपि च परलोकार्थमिति यत् ।
मतं भ्रान्तं त्यक्त्वा सकलनरकृत्यं नरवरो
महात्माऽसौ धर्मानुगतपरिपूतं विहितवान् ॥ ३९ ॥

अभून्नूनं गान्धी निरतिशयितो धार्मिकनर-
स्तदीयं सम्पूर्णं चरितमभवद् धर्मकविता ।
महात्माऽसौ मूर्तो मनुजवरधर्मप्रतिकृतिः
परं तद्धर्मो नो भवति कतिचिद् रूढिनिकरः ॥ ४० ॥

न तद्धर्मो हिन्दूरिति सुविदितो रूढिपरमः
परं नृणां वृत्तीर्जगति परिवर्त्यैव निखिलाः ।
निबध्नन् गाढं तान् खलु परमसत्येन सततं
ददत् पावित्र्यं च प्रतिपलमभूद् धर्मपरमः ॥ ४१ ॥

नरं नीत्वा दिव्यां परमपदवीं पार्थिवपदात्
प्रभोः साक्षात्कारात्सकलजनसौभ्रात्रजनकम् ।
नरादुच्चैर्नारायणवरपदं प्रापकमभू-
न्महातत्त्वं धर्मो निगमगदितो गान्ध्यभिमतः ॥ ४२ ॥

विशिष्टे पूजार्चे ह्यशनवसने यज्ञजपने
क्रियाकाण्डः सर्वं नहि भवति धर्मः कथमपि ।
क्षमासत्याहिंसाप्रशमकरुणास्नेहसहितं
विपन्नानां सेवां मनुजवरधर्मं निरदिशत् ॥ ४३ ॥

पृथिव्यां कुख्यातं छलकपटयुक्तं नृपनयं
विनिन्द्यं वेश्येव प्रतिपलचलं धर्मरहितम् ।
शुचिर्भूतैस्त्याज्यं भुवि नरवरैर्धर्मपरमै-
र्महात्माऽसौ चक्रे विमलविशदं धर्मसहितम् ॥ ४४ ॥

अभूद्धर्मायत्ता नृपनयसमाजार्थविषया
समस्ता तन्नीतिर्निखिलजनरीतिश्च विमला ।
मलं त्याज्यं मेने नृपनयमसौ धर्मरहितं
महात्मा धर्मात्मा स इव भुवने दुर्लभतमः ॥ ४५ ॥

उदात्तोच्चैर्लक्ष्यं कथमपि न लभ्यं कुकरणैः
शुचिः साध्यं प्राप्यं भवति शुचिभिः साधनगणैः ।
दृढा शान्तिर्विश्वे नहि भवति हिंसामयरणैः
फलप्राप्तिर्नूनं भवति भुवने बीजसदृशी ॥ ४६ ॥

समाजान्तर्व्याप्तप्रखरतमवैषम्यजनितं
निराशान्धध्वातं प्रतिहृदयपूर्णं नरवरः ।
क्षयं नीत्वा शान्तां रुधिररहितां क्रान्तिमतुला-
मियेषासौ कर्तुं विमलसुखशान्ति च तनितुम् ॥ ४७ ॥

अपाकर्तुं श्रेणीगतविषमतां मानवकृतां

विना वर्गद्वेषाद् रुधिरकणपातात् कलिविना ।
समेषां सौहार्दादपि च सहयोगादयतत
दयादानत्यागैर्धनिकजनवृत्तेश्च विनयात् ॥ ४८ ॥

प्रभोः साक्षात्कारः खलु समभवत् साध्यपरम–
र्महिंसासत्याभ्यां व्यथितजनदुःखार्तिहरणम् ।
अभूत्तस्यावाप्तेः परमविमलः साधनगण–
स्तदर्थं स्वीचक्रे नृपनयमपि च्छद्मपरमम् ॥ ४९ ॥

निराकारं देवं भुवनजनकं व्यापकविभु–
मियेषासौ दृष्टुं व्यथितजनसामान्यहृदये ।
तदीयाप्तिं मेने दलितजनसेवादिकरणा–
दतो सेवामग्नः सततमभवद् गान्धिमुनिराट् ॥५०॥

अनुष्ठेयं वीरैः प्रतिहननयोग्यैर्गतभयै–
र्न तु क्लीबैर्दीनैरपि च भुवने कातरजनैः ।
अहिंसाया श्रेष्ठं कठिनतरपाल्यं भुवि नरै–
र्महात्मा व्याचख्यौ विषममसिधाराव्रतमसौ ॥ ५१ ॥

अहिंसाऽभून्नूनं परमकृतिमच्छक्तिरतुला
मनाक् कातर्यार्थं नहि भवति तस्यामवसरः ।
परा काष्ठा सा हि प्रवरतमशौर्यस्य नितरा–
मिति स्पष्टीचक्रे विषममसिधाराव्रतमसौ ॥ ५२ ॥

असामर्थ्याद् द्वेषादपि न भयसन्त्रासवशतः
परं शक्त्या स्नेहादपि च भयराहित्यवशतः ।
यथार्थाहिंसाया भवति भुवने संभव इति
महात्मा व्याचष्टे विषममसिधाराव्रतमसौ ॥ ५३ ॥

अहिंसातात्पर्यं न खलु विरतौ प्राणहरणाद्
न वा तन्वा वाचा ह्यपि च मनसा द्रोहविरहे ।
परं प्रेम्णि स्नेहे सकलजगतः प्राणिषु परो
विधेयार्थस्तस्या इति निरदिशद् गान्धिमुनिराट् ।।५४।।

स्वकीयेषु स्नेहो भवति सदहिंसा न भुवने
यथार्थाऽहिंसा स्यादरिषु परमप्रीतिरनघा ।
घृणाऽसूयाहीनं हृदयमरिषु प्रेम विपुल-
महिंसायाः सिद्धिः परममहिता तेन कथिता ।। ५५ ।।

अहिंसाया नूनं कठिनतमदिव्यं भवति य-
दहिंसायुद्धोर्ध्वं नहि किमपि शिष्येल्लघुतमम् ।
घृणाऽसूयाचिह्नं रिपुरपि च मित्रे परिणमे-
न्महावैराश्चाङ्ग्ला ननु समभवन् किं न सुहृदः ।।५६।।

भयद्वेषासूयाशरणरहितत्वादिविगत-
क्षमाशान्तिस्नेहप्रणयपरिचर्यादिसहित- ।
महाऽहिंसाख्यातप्रबलतमशस्त्रस्य पुरतः
नहि स्थातुं शक्तिस्त्रिभुवनगतेत्याघुषदसौ ।। ५७ ।।

अहिंसासंरक्ष्यं भवति यदि रक्ष्यं नहि भुवि
सुरक्ष्यं तद्धिंसामयखरतरैः साधनगणैः ।
परं क्लैव्यं दैन्यं द्रवणमथ योग्यं न सुतरा-
मिति स्पष्टीचक्रे विषममसिधाराव्रतमसौ ।। ५८ ।।

अतः पाकाक्रान्ते भरतविषये कश्मिरभुवि
निरागोऽसृग्रक्ते भवति डलकासारपयसि ।
प्रयाणोत्कां सिद्धामरिदलविनाशाय पृतनां
महात्मा स्वाशीर्भिर्बलवदनुजग्राह यशसे ।। ५९ ।।

अहिंसायाः कृत्स्नं व्रतमिह पुरा पालितमभू-
न्निजात्मोद्धारार्थं बहुमुनिवरैरात्मचरिते ।
समष्टेर्मुक्त्यर्थं पुनरिह महाहेतिसदृशं
तदीयानुष्ठानं भवति भुवने गान्धिमहिमा ॥ ६० ॥

प्रकामं सौम्यायाः कुसुममृदुलायाश्च भुवने
ह्यहिंसायाः शस्त्रे परिणमयिता वज्रकठिने ।
विजेता सम्राजः प्रबलमहतो हेतिरहितं
महात्माऽसौ गान्धी ह्यतुलमहनीयो भुवि महान् ॥ ६१ ॥

प्रचण्डाणूर्जातोऽप्यगणितबलाढ्यात्मविभव-
मंहिसाऽऽत्मक्लेशप्रणयपरिचर्यादिकरणैः ।
प्रकाश्यारातीनां हृदयपरिवृत्त्या परिभवं
करिष्यत्तेनास्त्रं व्यरचि खलु सत्याग्रह इति ॥ ६२ ॥

पराशक्तेरंशो भवति खलदुष्टेष्वपि समः
तदुद्बोधात्तेषु प्रणयपरिचर्यादिकगुणैः ।
असौ शक्यं मेने हृदयपरिवृत्तिं जनयितुं
कठोरो लोहोऽपि द्रवति भुवने किं तनुभृताम् ॥ ६३ ॥

चिकीर्षुः सौराज्यं जगति समभूद् दण्डरहितं
स्वयं शिष्टं रक्षापुरुषरहितं धर्मसहितम् ।
अहिंसाकारुण्यप्रणयशमसौहार्दसरितं
प्रवाह्यात्राजस्रां मनुजहृदये नूनममलाम् ॥ ६४ ॥

तदीया धर्मार्थार्जनविनयनीत्यादिकमहा-
समस्यासम्बद्धा परमविशदा दृष्टिरभवत् ।
समेषामाध्यात्मीकरणमभवत्तस्य तु परं
समाधानं नूनं ह्यतुलमहनीयं खलु भुवि ॥ ६५ ॥

प्रयोगो यन्त्राणां जगति जनयेद् वृत्तिविरहं
नरव्यक्तिस्वत्वं मनुजमहनीयात्मगरिमा ।
अपि ध्वस्तौ स्यातामिति स बहुशो यन्त्रवरणं
तिरश्चक्रे गान्धी प्रबलतमयुक्त्या भुवि नरैः ।। ६६ ।।

समेषामुत्थानं न तु कतिपयानां स चकमे
तदर्थं चक्रेऽसौ कृतिमपि च सर्वोदय इति ।
समुत्थाप्याधःस्थानभिलषति साम्यं न तु जना–
नधः सम्पात्योच्चान् जगति समतावादिपरमः ।। ६७ ।।

ऋतं प्राप्तुं नालं जगति सुतरां केवलमहं
विपक्षोऽपि ज्ञातुं प्रभवति कदाचिन्मदधिकम् ।
इति स्वात्मानं स प्रतिभटदृशा द्रष्टुमशकद्
ध्रुवं सत्यान्वेषी भवति निरहङ्कारविनतः ।। ६८ ।।

रहस्येकं रूपं किमपि विपरीतं प्रकटने
गृहे ह्येकं चान्यद् बहिरिति विगर्ह्यं नयविदाम् ।
द्विजिह्वत्वं तेन प्रबलतरसा गर्हितमभूत्
समो ह्यन्तर्बाह्यं भवति खलु गान्धी कलियुगे ।। ६९ ।।

घृणाहिंसाऽसूयाकपटनिकृतिच्छद्मभरिते
महामायापूर्णे खलनृपनये धीरललितम् ।
अहिंसासत्यादिप्रवरगुणरत्नानुसरणं
बभूवास्योत्कृष्टा जगदुपकृतिर्नूनमतुला ।। ७० ।।

नृशंसात्याचारैश्चकितचकिता भारतजनाः
अजानन्तः कार्यं प्रबलतमसाम्राज्यपुरतः ।
अदम्या अधृष्या हिमगिरिसमा धीरपरमाः
निरातङ्का वज्रोपमदृढतमास्तेन विहिताः ।। ७१ ।।

घृणाहिंसापूर्णं विपुलतमसाम्राज्यमतुलं

नितान्तं निःशस्त्रैर्निरतिशयनिर्भीकपरमैः ।
पराभूतं लोकैरपि च भुवने निष्प्रभमभू-
न्महाश्चर्यं तस्याप्रतिममहनीयस्य महिमा ॥ ७२ ॥

अपूर्वं सत्तत्त्वं नहि किमपि तेन प्रकटितं
परं पूर्वाचार्यैः प्रगटितमहातत्त्वनिचयम् ।
स्वकीये सश्रद्धं विमलचरिते धारितमभ-
न्नहि ज्ञाने किन्त्वाचरणकरणे मर्त्यमहिमा ॥ ७३ ॥

उदात्तोच्चैश्चिन्तं सहजसरलं दम्भरहितं
मितापेक्षं नित्यं यमनियमतत्त्वैर्नियमितम् ।
तपस्त्यागादर्शं सततपरिचर्यापरिगतं
ह्यभूद्भूव्योदात्तं परमविमलं गान्धिचरितम् ॥ ७४ ॥

अनन्या तच्छ्रद्धा निरतिशयभक्तिश्च परमा
जगत्सर्गाधारप्रलयजननब्रह्मणि परे ।
चकारासौ सर्वं परमपुरुषस्यार्पणधिया
ह्यनासक्तो भक्तो भवति मुखरो दुर्लभतमः ॥ ७५ ॥

अहिंसाया दूतो भुवनमहितः सत्यदयितः
क्षमाशान्त्योर्मूर्तिः शमदमतपस्त्यागजलधिः ।
मसीहार्हद्बुद्धप्रणयकरुणापुञ्जपरमः
स्थितप्रज्ञो गान्धी जनक इव राजर्षिरपरः ॥ ७६ ॥

अनाथानां नाथः पतितदलितानां सुखयिता
शरण्यो दीनानां परमकरुणापूर्णहृदयः ।
परित्राता गोस्त्रीव्यथितविधुराणामपि महान्
महात्माऽसौ वन्द्यो भवति शतशो मानवगणैः ॥ ७७ ॥

हिमाद्रिः प्रोत्तुङ्गो ह्यपि लघुतमो यस्य पुरतो
गभीरापारोऽसौ जलधिरपि गाधो घनतया ।
दिशाः सर्वाः खर्वा विपुलगगनं वामनतमं
महात्माऽसौ गान्धी ह्यतुलमहनीयो भुवि महान् ।।७८।।

क्षमाशान्त्यौदार्यप्रचुरगुणरत्नैकजलधिः
सहिष्णुत्वाक्रोधप्रशमविनयानां प्रतिकृतिः ।
महाझञ्झावाताऽविचलचरणापूर्वलघुना
महात्माऽसौ गान्धी ह्यतुलमहनीयो भुवि महान् ।। ७९ ।।

सत्याहिंसाशमदमतपोब्रह्मचर्यादिकानां
विश्वक्षेमावहनपरमावश्यकानां गुणानाम् ।
संस्कृत्या नस्त्रिभुवनसमाराधितायाश्च नूनं
साक्षान्मूर्तिः प्रतिकृतिरभूद् गान्धिवर्यो महात्मा ।।८०।।

२-१०-६९



# धर्मतत्त्वसमीक्षा

## ( पूर्वार्धः )

सम्प्रत्युच्चैः स्थितिमतितरामर्थमात्रं बिभर्ति
मान्यं स्थानं परमपदवी शासकीयास्पदं च ।
विद्याज्ञानप्रवरगुणसंयोगलभ्यं यदासी-
दर्थेनाप्यं भवति सकलं केवलं चित्रमेतत् ।। १ ।।

विद्यापीठप्रवरपदवीसर्वकारीयसेवा-
संसत्सभ्याधिकृतिसचिवामात्यमानास्पदानि ।
शक्यान्याप्तुं श्रमविरहितं केवलं वित्तशक्त्या
क्रीतस्स्यात् किं भुवनजनकोऽप्यर्थशक्त्या न जाने ।। २ ।।

वित्तेनाप्यान्यखिलसुखसौविध्यसंसाधनानि
वित्तेनैव श्रुतगुणयशःकीर्तिमानास्पदानि ।
वित्तं धर्मः सकलनयनीत्यादिसारोऽपि वित्तं
वित्तं नूनं कलियुगभवो नूतनो ब्रह्मदेवः ।। ३ ।।

तस्माद् रात्रिंदिवमिह जनाः केवलं वित्तहेतो-
र्यत्नाधानाः सततगतिका नूनमुद्भ्रान्तचित्ताः ।
नाशङ्कन्ते किमपि दुरितं घोरमुग्रं विधातुं
स्वल्पे काले ह्यधिकधनलाभोऽस्ति साध्यं तदीयम् ।। ४ ।।

वित्तासक्तो धननिगडितः केवलार्थावलम्बी
वित्तोद्भ्रान्तो द्रविणगदितो वित्तमात्रोपजीवी ।
धर्माचारात्परमविमुखश्चार्थकामावलिप्तो
लोकः क्षेमावहनसुभगां संस्थितिं नाप्नुयाद् वै ।। ५ ।।

तन्त्रं ह्येतद् द्रविणपरमं वित्तमात्रप्रधानं
त्यक्त्वा तन्त्रान्तरमिह वरं वृत्तमुख्यं निवेश्यम् ।
मानुष्योच्चैस्तरशमदमत्यागसौहार्दभावं
यत्रादानाद् भवति सुतरां दानभावो गरीयान् ॥ ६ ॥

यत्र श्रेष्ठं परममहनीयं च मानुष्यमूल्यं
वित्तावाप्तेः शमदमतपस्त्यागभावो वरीयान् ।
प्राप्यं वित्तादिकमिह परं साधनत्वेन नाम
प्राप्तिर्नारायणवरपदस्यैव साध्यं नराणाम् ॥ ७ ॥

वित्ताद् वृत्तं परमवरणीयं च नूनं महीयो
यातायातं सततगतिकत्वाद्धि वित्तस्य धर्मः ।
वित्तक्षीणो भवति न लघु क्षीणवृत्तस्तु हीनो
रक्ष्यं तस्मादवहिततया वृत्तमेवात्र नित्यम् ॥ ८ ॥

सेव्यः कामो निगमविहितादेशधर्मानुसारं
भोग्यं वित्तं तदपि सुतरां धर्ममोक्षानुगामि ।
अन्ते मोक्षानुसरणपरावर्थकामावुपास्यौ
प्राचीनार्षप्रवरमुनिसन्देश एवं बभुव ॥ ९ ॥

धर्मादर्थः खलु सुखकरः कामभोगोऽपि धर्मात्
तस्मात्सेव्यो भवति सकलैर्धर्म एवाप्रमत्तैः ।
इत्थं व्यासः प्रवरमुनिराड् घोषयामास पूर्वं
किन्त्वर्थान्धः कलियुगजनो नैव दत्तावधानः ॥ १० ॥

कोऽयं धर्मः कथमिव भवेत् पालनीयः स लोकै-
रस्मिँल्लोके भवति सुखदो लोकलोकान्तरे वा ।
बाह्याचाराः प्रतनसमयादागतः कर्मकाण्डः
किं भो धर्मो भवति सुतरां चिन्तनीयं प्रशान्तम् ॥ ११ ॥

धर्मो लोकान्तरहितकरो नैहिकस्योपयुक्त
इत्युद्भ्रान्ता निगमविमुखा धर्मदृष्टिर्हि हेया ।
सिद्धिर्यस्मादुभयजगतो धर्मतत्त्वं तदेव
नूनं लोके विफलमनुजस्यान्यलोकोऽपि नास्ति ॥ १२ ॥

धर्मो नूनं सकलभुवने स्वान्तरङ्गे च मर्त्यै-
र्विश्वव्यापिप्रभुवरमहाशक्तिसत्तानुभूतिः ।
तन्निष्पत्तिः परहितरतिर्भूतमात्रानुकम्पा
सौभ्रात्रं चाखिलजनगणैः स्नेहसौहार्दभावः ॥ १३ ॥

सत्याहिंसाशमदमतपस्त्यागसौहार्दभावं
क्षान्त्यक्रोधव्यथितकरुणास्नेहसौजन्यपूर्णम् ।
विद्यासक्तं जनहितपरं जीवनं धर्मयुक्तं
मानुष्याभ्यन्तरवरगुणोत्कर्षसिद्धिर्हि धर्मः ॥ १४ ॥

पूर्वं स्वायंभुवमनुकृते धर्मशास्त्रे प्रणीतो
धर्मो धृत्यादिकदशविधैर्लक्षणैर्लक्षितोऽसौ ।
नूनं पूताचरणपरमः कर्मकाण्डानपेक्षः
मानुष्याभ्यन्तरवरगुणोत्कर्षसाध्यो बभूव ॥ १५ ॥

सैषा दैवी प्रवरगुणसम्पद्धि धर्मप्रतिष्ठा
स ध्धारत्रिभुवनगुरोर्ध्यानसान्निध्यलभ्या ।
विश्वात्मानं हृदयकुहरे भूतमात्रे च पश्यन्
कस्यामित्रं भवति च कथं कस्य विद्वेषकारी ॥ १६ ॥

लोकाधारो यमनियमसत्तत्त्वमूलो विशालः
ह्येको धर्मो भवति सुतरां मानवीयो न नाना ।
हिन्दूजैनार्हतमुसलिमक्रैस्तनाम्ना प्रसिद्धाः
भिन्नाचाराः कलहनिरताः सम्प्रदाया न धर्माः ॥ १७ ॥

नैव ज्ञातिर्विपुलविभवो नापि लिङ्गं न जन्म
नैव ज्ञानं कृतिविरहितं श्रेष्ठवंशोऽपि नैव ।
चारित्र्यं तु स्फटिकधवलं ज्ञानविज्ञाननिष्ठं
धर्माख्येयं भवति भुवने गौरवाधानहेतुः ॥ १८ ॥

नानापूजाचरणविधयो यज्ञयागादिकानि
मुद्रामाल्यादिकबहुविधोपाधयो भस्मचर्चा ।
नानातीर्थस्थलपरिचयो धर्मशास्त्रस्य पाठो
धर्माभासो भवति सुतरां केवलः कर्मकाण्डः ।। १९ ।।

जातः सूर्योदय इति जनैर्नापदेश्यं कदाचित्
ध्वान्तोच्छेदिप्रखरकरपादातपादेव बोध्यात् ।
धर्मास्तित्वं ह्यपि न जपयज्ञादिकर्मावगम्यं
विश्वग् जातप्रगुणपरिवर्तात्तु विज्ञेयमेव ।। २० ॥

धर्मावित्ये भुविसमुदिते दैन्यवैषम्यजातं
दुःखध्वान्तं निबिडमभितः स्थातुमेवासमर्थम् ।
नानादुःखव्यथितरुदिते सर्वतो दीनवृन्दे
ध्याने मग्नः कथमिव भवेत् सत्यधर्माधिरूढः ।। २१ ।।

दुःखार्तानां करुणरुदितं दीनहीनार्तनादः
श्रोतुं यो न प्रभवति जनो ध्यानपूजानिमग्नः ।
किं ध्यानेन व्यथितजनदुःखानपेक्षेण तस्य
दीनार्तार्तिप्रशमनफलं धर्मतत्त्वं हि नाम ।। २२ ।।

शैत्यं नित्यो भवति सलिलस्यौष्ण्यमग्नेश्च धर्म-
स्तत्सौभ्रात्रं सदयहृदयत्वं च मानुष्यधर्मः ।
यस्माद् हीनो नरपशुरसौ केवलाकारभिन्नो
धर्माद् रिक्तो भवति मनुजः श्वापदेनैव तुल्यः ॥ २३ ।'

प्रीत्या सर्वैः सहजमधुरा साम्यवृत्तिर्हि धर्म-

स्तत्सिद्ध्यर्थं यमनियमसत्तत्त्वजातैः समेतम् ।
नानाकल्पाचरणविधयः कल्पिताः स्युः कदाचित्
काले याते विविधविषयो धर्मसारत्वमापुः ॥ २४ ॥

ज्योतिःपुञ्जो दिनमणिरसौ तैलवर्ति विनापि
पूजार्चाभ्यामपि विरहिता धर्मयुक्ताश्च केचित् ।
तैलापूर्णा अपि कतिपया दीप्तिहीनाश्च दीपाः
पूजासक्ता अपि च सततं धर्महीनाश्च केचित् ॥ २५ ॥

शल्कं बीजात् तुषमपि यवात् साधनत्वेन गौणं
तद्वद् बाह्यार्चनविधिगणः साधनत्वादमुख्यः ।
देहादात्मा भवति सुतरां चेतनत्वात्प्रधानः
प्रीत्या सम्यग् व्यवहृतिरभूच्छ्रेष्ठधर्मान्तरात्मा ॥ २६ ॥

यद्यत्कार्यं विहितमितरैः कल्पते नात्मतृप्त्यै
तत्तद् वर्ज्यं भवति मनुजैर्वर्तने सार्धमन्यैः ।
आत्मौपम्याद् व्यवहरणमेवास्ति मानुष्यधर्मः
सर्वैःप्रीत्या समुचितसमाचेष्ठितं धर्मसारः ॥ २७ ॥

विश्वं यस्माद् भवति सकलं धारितं पोषितं च
यस्माद् वातावरणमभितो जायते सुप्रसन्नम् ।
यस्माल्लोके विघटनकरी वृत्तिरुपशान्तिमेति
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ॥ २८ ॥

यस्मादर्थः परमसुखदो मोक्षसाध्योपकारी
यस्मात्कामः खलु नियमितो नोत्पथं नीयमानः ।
यस्मात्सिद्धौ भवत इह तावर्थकामौ च मोक्षः
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ॥ २९ ॥

यस्मात्सर्वैर्भुवनमनुजैः प्रीतिसौजन्यभाग्भि-
रन्योन्यानां सुखदसहयोगित्वसौभ्रात्रवद्भिः ।
स्वार्थं त्यक्त्वा परहितपरैर्भूयते देवकल्पैः
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३० ।।

मैत्रीभावप्रणयसमतास्नेहसौहार्दयुक्तं
सर्वैः साकं कथमिह जनैर्वर्तितव्यं यथार्हम् ।
इत्थं लोकानुपदिशति यल्लौकिकं तत्त्वजातं
तत्सतत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३१ ।।

ईर्षासूयाकलहरिपुताद्वेषरोषैः प्रशान्तं
प्रोद्भूतं तैर्यमनियमसत्तत्त्वजातैरुदारैः ।
मानुष्योच्चैर्गुणजलनिधिहर्युत्तरङ्गश्च यस्मात्
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३२ ।।

सम्पद् यत्रासुरगणवृता नाथहीना विरौति
दैवी संपद् विलसतितरां यत्र लब्धावकाशा ।
भूमौ यस्मात्परमसुखदा जायते स्वर्गसृष्टि-
स्तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३३ ।।

सामञ्जस्यं मधुरमधुरं कल्पते यद् विधातुं
भिन्नालोकप्रकृतिचरिताचारलोकेषु लोके ।
स्वार्थो यस्माद् भवति परमार्थेन साकं सुसिद्धः
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३४ ।।

यस्मान्मर्त्यः सहजसुलभं देहसौख्यं विहाय
नानादुःखव्यथितजनसन्तापदूरीचिकीर्षुः ।
आत्मोत्सर्गं सपदि कुरुते लोककल्याणहेतोः
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३५ ।।

यस्मादुच्चैस्तरमतितरां पार्थिवोऽयं मनुष्यो
यात्युच्छ्रायं गगनपि यद् वामनं भाति सर्वम् ।
हीनश्चास्मात्पतति गहने निम्नपातालगर्ते
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३६ ।।

यस्मान्नूनं लघुनरपदान्मानवोऽयं विशालं
श्रेष्ठं नारायणवरपदं नूनमाप्नोति सद्यः ।
हीनश्चास्मान्नरवरपदाद् वानरत्वं प्रयाति
तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३७ ।।

यस्मान्मर्त्यो मनुजजनने देहपाताद्विनापि
ह्यत्रैवाप्नोत्यमरपदवीं जन्मजन्मान्तराप्याम् ।
जीवन्नेव प्रभवतितरां ब्रह्मभूयाय सद्य-
स्तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३८ ।।

भिन्नालोका विविधमतभाजोऽपि लोका हि यस्मा-
दन्योन्यानां सुखहितरता द्वेषहिंसाविरक्ताः ।
सन्तः पारस्परिकसहयोगित्वसङ्कल्पवन्त-
स्तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ३९ ।।

स्वान्ते ध्यायन् त्रिभुवनगुरुं शुद्धपूतात्मशक्त्यै
सन्तप्तार्तिप्रशमनरतो दीनहीनैकबन्धुः ।
यस्माल्लोके भवति मनुजः स्नेहकारुण्यपूर्ण-
स्तत्सत्तत्त्वं विमलधवलं धर्मशब्दावबोध्यम् ।। ४० ।।

११-६-८२

# धर्मतत्त्वसमीक्षा (उत्तरार्धः)

निर्मर्यादाममितमहतीं सृष्टिमेतामनन्तां
संख्यातीतैः प्रकृतिनियमैः सूक्ष्मसूक्ष्मैर्निबद्धाम् ।
ब्रह्माण्डान्तर्गतनियमितं शासनं निर्विकल्पं
दृष्ट्वा नूनं भवति चकितो मानवोऽयं विमूढः ।। १ ।।

प्रज्ञातीतां निरतिशयितां ब्रह्मशक्तेर्महत्तां
दुर्लङ्घ्यं दुर्ग्रहमतितरां संविधानं च तस्याः ।
आत्माल्पत्वं परमलघुतां तुच्छतां चावलोक्य
नूनं नम्रीभवति मनुजो भ्रष्टविज्ञानगर्वः ।। २ ।।

बोधातीतैर्नियतनियमैर्गाढबद्धामभेद्यै-
रेतां दृष्ट्वा विपुलरमणीयां च विस्तीर्णसृष्टिम् ।
इच्छाशक्तेः किमपि बलवद् योजनाबद्धतन्त्रं
दृष्ट्वा नम्रीभवति सहसा मानवोऽयं विमूढः ।। ३ ।।

सूर्यं भूमेस् त्रिगुणितचतुर्लक्षवारं महान्तं
तस्मात्सूर्यादपि च शतशो लक्षकृत्वो विशालाम् ।
संख्यातीतां ग्रहगणततिं भासमानामनन्ते
दृष्ट्वा नम्रीभवति मनुजः स्वल्पशक्तिर्विमूढः ।। ४ ।।

भ्राम्यन्तीं तां ग्रहगणततिं कल्पनातीतगत्या
निःसंघट्टं स्खलनरहितं चात्मनिर्दिष्टकक्षे ।
त्रैलोक्यान्तर्गतविधिविधानं च सूक्ष्मानुबन्धं
दृष्ट्वा नूनं भवति चकितः स्वल्पशक्तिर्मनुष्यः ।। ५ ।।

यद् ब्रह्माण्डे भवति नियतं व्यक्तिपिण्डे तदेव
ब्रह्माण्डान्तर्गतनियमितां बुद्धियुक्तां व्यवस्थाम् ।
दृष्ट्वाऽऽश्चर्यावहविधिकृतामेकतां भिन्नतासु
श्रद्धातुं ना भवति बलवत् प्रेरितो विश्वशक्त्याम् ॥ ६ ॥

ओतप्रोतं विविधनियमैर्विश्वमेतदनन्तं
सूक्ष्मप्रज्ञागुणविलसितं चेतनाशक्तियुक्तम् ।
सोद्देश्यं सत्क्रमपरिगतं सूत्रबद्धं विलोक्य
श्रद्धातुं ना भवति बलवत् प्रेरितो विश्वशक्त्याम् ॥ ७ ॥

पर्णे पर्णे प्रतिकणगतां सङ्गतिं सुव्यवस्थां
सामञ्जस्यं मधुरमधुरं नूनमाश्चर्यरूपम्
साभिप्रायं त्रिभुवनगतं संविधानं च दृष्ट्वा
श्रद्धातुं ना भवति बलवत् प्रेरितो विश्वशक्त्याम् ॥ ८ ॥

नित्यं प्राच्यां दिनमणिरुदेत्यस्तमेति प्रतीच्यां
बीजादुद्भिूत्तदनु तरवः पुष्पसम्पत्फलानि ।
बाल्यात्कौमारकमनु जरा मृत्युरन्ते च जन्तोः
सर्वत्रैवं दृढविधिमयं शासनं संविधानम् ॥ ९ ॥

संज्ञाबुद्धिप्रचुरनियमा हेतुसङ्कल्पपूर्वाः
त्रैलोक्यान्तर्गतविधियुतं शासनं संविधानम् ।
इच्छाशक्तेः किमपि बलवद् योजनाबद्धतन्त्रं
किं स्याच्छक्यं प्रबलमतिमद्दिव्यशक्तिं विनैव ॥ १० ॥

दृष्ट्वाऽपारामतुलविपुलां कल्पनापोढसृष्टिं
स्वक्षुद्रत्वं परमलघुतां ब्रह्मशक्तेर्महत्ताम् ।
कोऽहं कोऽसाविति स चकितो भावयन्नन्तरङ्गे
चिन्तालीनो भवति मनुजो धर्मतत्त्वानुविष्टः ॥ ११ ॥

विश्वव्यापिप्रभुवरमहाशक्तिसम्पूर्णतायां
भव्यां व्यक्तिं ह्यतुलविपुलां सृष्टिरूपामनन्ताम् ।
स्वाल्पज्ञत्वं मतिपरिमितिं स्तोकशक्तिं च दृष्ट्वा
जिज्ञासुस्तां भवति मनुजो धर्ममूलं तदेव ।। १२ ।।

अत्रैवाविर्भवति मनुजे धर्मतत्त्वानुभूतिः
स्वस्यात्यन्तां परमलघुतां विश्वशक्तेर्महत्ताम् ।
सम्यग् ज्ञात्वा तदनुगुणवृत्तिर्हि मानुष्यधर्मः,
धर्मो नूनं प्रकृतिपरमात्मात्मसम्बन्धबोधः ।। १३ ।।

सर्वोच्चायां नयनविषयातीतशक्त्यां नराणां
श्रद्धास्तिक्यात् परमविनता भावसिक्ता च वृत्तिः ।
नम्रीभावः परहितरतिर्भूतमात्रानुकम्पा
सौहार्दाप्तिर्भुवनमनुजैर्धर्मतत्त्वं वरिष्ठम् ।। १४ ।।

शक्तेस्त्वस्याः प्रकृतिगुणकर्मान्तरेण प्रजानां
चिन्ताभेदाद्भवति भुवने धर्मसङ्कल्पभेदः ।
धर्मोत्सादेस् त्रिभुवनगुरोर्लोकसङ्कल्पनापि
तस्माद्भाव्या परमविशदा तर्कविज्ञानयुक्ता ।। १५ ।।

लोके यद्यन्मनुजकरणैर्गृह्यते वस्तुजातं
तत्तन्नूनं प्रकृतिविकृतत्वाद्धि कार्यं समस्तम् ।
साद्यन्तं सत् सकलभुवनं कार्यमेवास्ति नूनं
तत्केनापि प्रबलमतिमत्कारणेनास्य भाव्यम् ।। १६ ।।

भव्योदात्ता विपुलविपुला दिव्यसौन्दर्यपूर्णा
विध्याबद्धा परमरुचिरा भावनातीतसृष्टिः ।
चिन्त्या लोकैर्भवति यदि चेत्कर्तृहीना स्वयंभू-
रन्धश्रद्धा जगति महती नूनमन्या न कापि ।। १७ ।।

ईदृग् रम्यं स्खलनरहितं चारुसर्वाङ्गपूर्णं
ब्रह्माण्डं तत् प्रकृतिरचितं नूनमाकस्मिकं च ।
नित्यं नैसर्गिकपरिणतिं मन्यमानैः प्रकृत्याः
स्वावासान्तर्घटपटकटाश्चिन्तनीयास्तथैव ॥ १८ ॥

ईषद्वीपाः प्रतनुघटिकाः क्षुद्रसूच्यः कुटीरा
वापीकुल्याः सकलमपि चेन्निर्मितं कर्तृयुक्तम् ।
ब्रह्माण्डं तद् विविधविपुलं सूर्यनक्षत्रताराः
तुङ्गाः शैला जलधिसरितः कर्तृहीनाः कथं स्युः ॥ १९ ॥

नानावर्णाकृतिसुमखगा अद्भुताश्चर्यरूपाः
पुष्पात्पुष्पं नयनमधुरं ह्युत्पतन्तः पतङ्गाः ।
कूजन्तश्चास्फुटकलरवं रक्तकण्ठाः शकुन्ताः
जाता निष्कर्तृकमिति मतं युक्तियुक्तं न भाति ॥ २० ॥

विश्वं स्वाभाविकमिह भवेच्चेन्न नश्येत्कदाचिद्
भूयोभूयस् त्रिभुवनमिदं जायते ध्वंसते च
नाशोत्पत्ती कथमिव मिथो विप्रतीपौ गुणौघौ
निश्चैतन्ये प्रकृतिजनिते भूतसङ्घे भवेताम् ॥ २१ ॥

श्लेषासक्तः प्रकृतिनिकरश्चेन्न सृष्टेर्विसर्गो
विश्लेषार्थो भवति यदि चेद् विश्वसृष्टिर्न शक्या ।
सक्तासक्तो यदि च समसङ्ख्यो न सृष्टिर्न नाश-
स्तच्चिच्छक्तिर्जनिलयकरी नूनमस्त्येव सृष्टेः ॥ २२ ॥

संज्ञाप्रज्ञाचितिविरहितो भूतसङ्घः प्रकृत्या
नानारूपं सततगतिकं भिन्नभिन्नस्वभावम् ।
विश्वं कर्तुं परिणमयितुं हर्तुमेवासमर्थः
निसंज्ञो निष्क्रिय इह गतिं नैव शक्तः प्रदातुम् ॥ २३ ॥

संज्ञाहीनान् प्रकृतिपरमाणून् हि भिन्नस्वभावान्
शक्तिः संयोजयति च वियुक्तं च नूनं करोति ।
नानावर्णाकृतिगुणमयं विश्वमेवं विधात्री
संहर्त्री च प्रभवतितरां कापि शक्तिर्विशिष्टा ॥ २४ ॥

सूक्ष्मैर्नानाघटकघटितं कालयन्त्रं लघिष्ठं
कर्त्रा यावद्विहितगतिकं चेष्टते तावदेव ।
सर्गारम्भात्स्खलनरहितं सञ्चलत्सूर्ययन्त्रं
कर्त्रा हीनं भवति च कथं चिन्तनीयं यथार्थम् ॥ २५ ॥

राज्ये राज्याधिपतिरहितं शासनं नैव शक्यं
विद्यापीठे कुलपतिविना नानुशास्तिर्व्यवस्था
मुक्त्वाऽध्यक्षं नियमविधयो नैव स्थातुं समर्थाः
तद् ब्रह्माण्डे कथमिव भवेच्छासनं शास्तृहीनम् ॥ २६ ॥

इच्छाशक्तिः खलु बलवती ज्ञानचैतन्ययुक्ता
निश्चैतन्यान् प्रकृतिपरमाणून् हि भिन्नप्रमाणम् ।
कृत्वा युक्तान् पुनरपि वियुक्तांश्च नूनं विधाय
चित्रं विश्वं खलु विदधती सत्यमेवास्ति भिन्ना ॥ २७ ॥

सा चिच्छक्तिर्घटयतितरां विश्वमेतद्विचित्रं
नानारूपं विविधविपुलं ह्यद्भुतं चाद्वितीयम् ।
तत्सैवान्ते विघटयति संश्लेषविश्लेषकर्त्री
रङ्गे नानाविधनटनटीः सूत्रधारो यथाऽसौ ॥ २८ ॥

सर्वोऽपूर्णो विकलभुवने पूर्णतां प्राप्तुमुत्कः
सर्वस्त्रोतांस्यखिलसरितः सागरं यन्ति पूर्णम् ।
जीवोऽपूर्णः सुखमभिलषन् स्वल्पशक्तिश्च पूर्णं
विश्वात्मानं परमसुखदं प्राप्तुमुत्कण्ठितोऽस्ति ॥ २९ ॥

अग्निर्लिप्सुर्भवति भुवने सूर्यमेवात्मकेन्द्रं
स्वाधिष्ठानं ह्यधिजिगमिषुः सिन्धुमेवाम्बुराशिः ।
उत्क्षिप्तोऽपि प्रबलतरसा भूमिमायाति लोष्ठो
जीवात्मापि प्रभुवरमहानन्दकन्दाभिलाषी ।। ३० ।।

आनन्दार्थं भवति मनुजस्यान्तरात्मेहमानः
तस्यावाप्तिः कथमपि जडाद् भूतसङ्घान्न शक्या ।
ईशान्नूनं प्रभवतितरां सच्चिदानन्दरूपात्
तृष्णार्तः किं खलु मृगजलाद् वीततृष्णो बभूव ।। ३१ ।।

श्रेष्ठायां श्रद्दधति मनुजा विश्वशक्त्यां विधात्र्यां
कालातीतः परममहनीयात्मशक्त्यां जनानाम् ।
विश्वासोऽयं भवति भुवने धर्मतत्त्वादिमूलं
वैमत्यात्तत्प्रकृतिविषये धर्मभेदास्तु नाना ।। ३२ ।।

तस्माद्धर्मो भवति भुवने व्यापकः सार्वभौमो
भूमौ नाभूदपि न भविता तादृशः कालखण्डः ।
यस्मिनद्धा भवति मनुजः सर्वथा धर्मशून्यो
धात्रैवोप्तं मनुजहृदये धर्मविश्वासबीजम् ।। ३३ ।।

अन्नाभावात् क्षुधितजनता नूनमश्नात्यभक्ष्यं
क्षुत्सन्त्रस्ता जनिरपि शिशुं दृश्यते भक्षयन्ती ।
एवं धर्मक्षुधमपि जनाः सत्यधर्मानभिज्ञाः
नानादेवार्चनबलिसमाराधनैस्तर्पयन्ति ।। ३४ ।।

तस्माल्लोकायतिकपुरुषैः साम्यवादिब्रुवैश्च
प्रत्याख्यातुर्द्धिस् त्रिभुवनगुरुं देवदेवं सदर्पम् ।
भूतप्रेतादिकबहुविधास्वद्भुतामानुषीषु
अन्धश्रद्धा प्रकृतिविपरीतासु शक्तिष्वकारि ।। ३५ ।।

बौद्धैर्जैनैरपि कतिपयैर्नास्तिकैरन्यलोकै-
रीशास्तित्वं भुवनजनकत्वेन संत्यक्तवद्भिः ।
तस्य स्थाने सुगतजिनतीर्थङ्करग्रावमूर्तीः
सम्पूज्यान्तःकरणपरितृप्तिर्हि सम्प्राप्तुमिष्टा ॥ ३६ ॥

एकस्यैव त्रिभुवनगुरोरर्चकाराधकेषु
तद्रूपाख्यावसतिगुणकर्मानुलक्ष्य प्रसर्पत् ।
घोरं पारस्परिककलहं द्वेषवैरानुबन्धं
दृष्ट्वा धर्मेश्वरविमुखतां शिक्षिता नूनमापुः ॥ ३७ ॥

यादृश्येवेश्वरविषयका भावना भाविकानां
तादृग् धर्मो भवति सुतरामुच्चनीचो जनानाम् ।
यावत्युच्चैस्तरविकसिता धर्मदृष्टिर्जनानां
तावत्येव प्रगतविशदा संस्कृतिः सभ्यता च ॥ ३८ ॥

सृष्टयुत्पत्तिस्थितिलयकृतं देवदेवं महेशं
केचित्स्वर्गे नियतवसतिं किन्तु दृष्टान्तहेतोः ।
धृत्वा रूपं मनुजसदृशं सञ्चरन्तं पृथिव्यां
संमन्यन्ते परमपुरुषं ह्यात्मकामानुरूपम् ॥ ३९ ॥

स्वर्गस्थः सन्नपि कतिपयैर्विश्वदेवो धरित्रीं
शासल्लोकाधिपतिरिव सङ्कल्पितो देवदूतैः ।
स्वैरं लोकान् विविधसुखदुःखादिभाजश्च कुर्वन्
लोकैरात्मप्रतिकृतिनिभो भावितो भूतनाथः ॥ ४० ॥

सर्वज्ञाता त्रिभुवनगुरुर्व्यापकः सर्वसाक्षी
चित्रं लोकैर्मनुजसदृशः तर्कितो देहधारी ।
नाना लीला अपि च विदधन्मर्त्यभावानुरूपाः ।
विस्मृत्यास्य त्रिभुवनगुरुत्वानुरूपं स्वरूपम् ॥ ४१ ॥

सृष्ट्युत्पत्तिस्थितिविलयकृत्सर्वभूतान्तरात्मा
सर्वव्यापी त्रिभुवनगतः सर्ववित्सर्वसाक्षी ।
ब्रह्माण्डान्तर्गतविधिविधानस्य कर्ता नियन्ता
मूर्तो देही कथमिव भवेदेकदेशी विनाशी ।। ४२ ।।

साकारस्य प्रकृतिपरमाणूत्करत्वात्क्षयोऽस्ति
क्षीणस्यान्तो भवति नियतश्चादिरप्यस्ति तस्य ।
यज्जन्मान्तौ भवत इह तन्नैव नूनं ह्यनन्तं
तस्मान्मूर्तः प्रकृतिविकृतिर्भूतनाथो न शक्यः ।। ४३ ।।

साकारश्चेद् भुवनजनको मूर्तिमद्देहधारी
विश्वव्यापी निरतिशयितो निर्जरो निर्विकारः ।
नित्योऽनन्तः प्रभवरहितः सच्चिदानन्दरूपः
सर्वाधारो भवति च कथं भूतमात्रान्तरात्मा ।। ४४ ।।

अस्यात्यन्ताद्भुतनियमितब्रह्मचक्रस्य कर्ता
नूनं न स्यान्नियमविपरीताद्भुताश्चर्यकारी ।
तर्कापेता बहुविधचमत्कारगाथास्तदीयाः
तत्स्वैरत्वप्रचुरपिशुनाश्चेश्वरत्वापहन्त्र्यः ।। ४५ ।।

निन्दाश्लाघादिकगुणगणावश्यमाध्यस्थ्यभाजं
विश्वात्मानं त्रिभुवनगुरुं पूर्णकामं निरीच्छम् ।
मत्वा साधारणमिव जनं चाटुवाक्सम्प्रसाद्यं
स्वार्थपूर्त्यै विफलनुतिभिः सान्त्वयन्त्येव लोकाः ।। ४६ ।।

ब्रह्माण्डेशं भुवनजनकं मुक्तसर्वाभिलाषं
सर्वैश्वर्यप्रदमपि जना आत्मकामानुरूपम् ।
खाद्यापेयैर्विविधबलिभिर्यज्ञयागादिभिश्च
क्षुत्तृष्णार्तं जनमिव समाराधयन्तीति चित्रम् ! ।। ४७ ।।

सन्तुष्टोऽसौ स्तुतिबलिजपैर्भक्तवर्गोपकर्ता
न्याय्यान्याय्यं किमपि सुतरां संविधातुं समर्थः ।
एषा भ्रान्ता परमवितथा कल्पनैवापनेया
नूनं लोकैः परमपुरुषो भावितः स्वात्मरूपः ॥ ४८ ॥

सम्पूर्णस्य त्रिभुवनगुरोराप्तकामस्य पूजा
नूनं न स्यादशनवसनावासदानेन तस्मै ।
किन्तु स्यात्तत्प्रवरगुणसन्धारणाज्जीवने स्वे
क्षुत्तृड्वाग्च्छारहितपरमात्मा न सेव्योऽन्नपानैः ॥ ४९ ॥

विश्वात्माऽसौ परमसदयो दीनबन्धुर्दयालुः
निष्कामोऽपि प्रणयभरितो नित्यशुद्धस्वरूपः ।
सर्वभ्राता सकलहितकृत् स्नेहकारुण्यशीलः
भाव्यं भक्तैरपि भगवतो दिव्यभावानुरूपैः ॥ ५० ॥

लोके देवार्चनमिह जना कुर्वते देवतुष्टयै
तुष्टः कुर्यान्निजजनहितं नूनमित्येव हेतोः ।
किन्तु भ्रान्ता परमवितथा कल्पनैषापनेया
नूनं नित्यो विकृतिरहितो देवदेवोऽविकार्यः ॥ ५१ ॥

देवो ध्येयो भवति मनुजैर्नूनमात्मार्थमेव
स्वात्मोत्कर्षो हृदयमनसोः शुद्धता पूतता च ।
चित्तैकाग्र्यं परमशुचिता निर्मलत्वं च बुद्धेः
सत्वोद्रेकः प्रवरगुणसम्पादनं भक्तिसाध्यम् ॥ ५२ ॥

सर्वैश्वर्यान्वितविभुवरस्याप्तकामस्य तस्य
विश्वस्रष्टुः सकलभुवनव्यापिसर्वेश्वरस्य ।
पूजाध्यानस्तवनजपनोपासनायज्ञयागैः
साध्यं किं स्यादिति तु सुतरां चिन्तनीयं मनुष्यैः ॥ ५३ ॥

तत्पूजाऽर्चास्तवनजपनध्यानसम्प्रार्थनाभि-
र्मानुष्यान्तःकरणमुकुरं साधनीयं विशुद्धम् ।
तत्सान्निध्यात् सकलगुणरत्नैकरत्नाकरस्य
सङ्क्रान्ताः स्युः कतिपयगुणा मानवस्यान्तरङ्गे ॥ ५४ ॥

भूतातीतः करणविषयागोचरीभूतदेवो
नैव ग्राह्यो मनुजकरणैः केवलैर्भूतजातैः ।
किन्तु स्वान्तःकरणकुहरे चेतसैवानुभाव्यः
स्वान्ते ध्येयो विमलमनसा देवदेवो मनुष्यैः ॥ ५५ ॥

धर्मश्रद्धामनघजनतामीशधर्मादिनाम्ना
धूर्तैर्धर्मध्वजिभिरतिसंधीयमानां विलोक्य ।
क्रुद्धैर्लोकायतिकपुरुषैर्धर्ममेवाक्षिपद्भि-
र्धर्मः प्रख्यापित इह जनोन्मादि तीक्ष्णाहिफेनम् ॥ ५६ ॥

धर्मो लोकान्तरसुखकृते पालनीयो मनुष्यैः
तस्मादामुष्मिकवरसुखापेक्षया गर्हणीयें ।
स्वल्पस्थाय्यैहिकसुखकृते नैव यत्नो विधेयो
धूर्तैरित्थं ह्यनघसुजनां वञ्चिता धर्मनाम्ना ॥ ५७ ॥

लोके धर्मप्रणयिजनसामान्यशोषं विलोक्य
स्थाने स्थाने कपटचरिताचारहीनांश्च लोकान् ।
दृष्ट्वा दम्भाचरणचतुरान् धार्मिकंमन्यधूर्तान्
लोके लोकायतिकसरणिर्लब्धजन्मा बभूव ॥ ५८ ॥

लोकान् मायामृगजलनिभस्वर्गसौख्यप्रलुब्धान्
कृत्वा सांसारिकसुखगणात् तन्वती चापरक्तान् ।
सत्यापेता विकृतवितथा धर्मसङ्कल्पनैषा
नूनं लोके कलहरिपुतादीनशोषादिहेतुः ॥ ५९ ॥

त्रैलोक्यात्यद्भुतविधिसमीक्षा हि विज्ञानहेतु-
रास्तिक्यं वै विधिगणविधात्रोश्च सम्बन्धमार्गः ।
तत्सद्भावान्मनुजचरिताचाररीतिर्हि धर्म-
स्तस्मान्नैव प्रभवतितरां धर्मविज्ञानवैरम् ॥ ६० ॥

धूर्तैर्धर्मध्वजिभिरवनावीशधर्मादिनाम्ना
त्रैलोक्यान्तर्गतविधिविधानानुसन्धानकृत्सु ।
क्रूरं यच्चेष्टितमिह महामान्यवैज्ञानिकेषु
तस्माद्वैज्ञानिकजनगणा धर्मशत्रुत्वमापुः ॥ ६१ ॥

धर्माध्यक्षैः कृतककपटैः सत्यसंशोधकेषु
धर्मव्याजाचरितदुरितक्रौर्यविक्षुब्धलोकैः ।
त्यक्तो धर्मप्रभवपरमात्मापि धर्मेण साकं
व्यर्थौ नानाकलहजनकौ नूनमित्याक्षिपद्भिः ॥ ६२ ॥

सत्यो धर्मो भुवनजनकल्याणकृत्सार्वभौमो
विज्ञानं च प्रकृतिनियमान्वेषमात्रानुबन्धि ।
नैव स्यातां कथमपि मिथो वैरविद्वेषभाजा-
वेकं ह्याध्यात्मिकमिह परं भौतिकोत्कर्षकारि ॥ ६३ ॥

नूनं नायं भवति मनुजः केवलो भूतसङ्घो
देहातीतः करणरहितः केवलात्मापि नैव ।
देहात्मैकीकृतसमुदयो मानवो नाम लोके
देहात्मानौ सममिह ततः प्रापणीयौ विकासम् ॥ ६४ ॥

सत्यो धर्मो मनुजहितकृत् सत्यविज्ञानशोधो
नैवाराती ह्यपितु सहयोगित्वमाप्तौ वयस्यौ ।
सूक्ष्मान्वीक्षा प्रभुवरकृतेः सत्यविज्ञानहेतु-
र्धर्मोद्देशो भवति परमात्मात्मसम्बन्धमार्गः ॥ ६५ ॥

अन्योन्यस्य प्रियसहचरौ पूरकौ स्नेहभाजौ
सन्तौ लोके परमसुखदौ तौ हि विज्ञानधर्मौ ।
धर्माद्रिक्तं प्रलयपिशुनं भाति विज्ञानमन्धं
धर्मः पङ्गुः प्रगतिरहितः सत्यविज्ञानहीनः ।। ६६ ।।

देशो वैज्ञानिकसमुदयोत्तुङ्गशृङ्गाधिरूढः
प्राज्यैश्वर्यप्रचुरधनसम्पत्तिसम्प्लावितोऽपि ।
नूनं निःस्वो भवति ननु चेद् धर्मसम्पद्विहीनो
बाह्योत्कर्षान्मनुजहृदयोत्कर्षसम्पद् वरिष्ठा ।। ६७ ।।

१५-१२-१९८३

## अनात्मवादः खलु दुःखमूलम्

ऐश्वर्यपुण्योदयशृङ्गरूढः
स्वर्गस्थदेवैरपि वन्दनीयः ।
भूमण्डनो भारतवर्षदेश-
स्त्रैलोक्यचारित्र्यगुरुर्बभूव ।। १ ।।

यत्कीर्तिरम्याद्भुतगन्धलुब्धं
भृङ्गायमानं भुवनं समस्तम् ।
तत्पादपद्मार्चनसम्प्रसक्तं
मनोज्ञगुञ्जारवमाततान ।। २ ।।

नूनं दिवः खण्ड इवावनिस्थो
हैमो गरुत्मानिति लोकवित्तः ।
प्रेप्सुर्जनिं देवगणोऽपि यत्र
घोरं तपो दुश्चरमात्रचार ।। ३ ।।

अहो यदीयोज्ज्वललोकवृत्तं
यत्कैकयश्चाश्वपतिर्जुघोष ।
स्तेनो न मे जानपदे न शौण्डी
स्वैरी न कश्चिन्न च पांसुलेति ।। ४ ।।

उदारचारित्र्यमहो जनानां
यद्गेहमभ्यागतमानवेभ्यः ।
आपस्स्थले दुग्धमुपाहरन्ति
कुर्वन्ति सत्कारमुदारवाचः ।। ५ ।।

अलक्षितं यत्र विशन्ति रात्रौ
सुप्तेषु लोकेषु निकेतनेषु ।
चन्द्रस्य पादा न तु चोरपादा
अहो सुधन्यो भुवि नाक एव ।। ६ ।।

लुण्ठाकपाटच्चरवीतचिन्ता–
स्तालैर्विहीनेषु गृहेषु रात्रौ ।
स्वपन्ति लोका सुखशान्तियुक्ता
इत्यङ्कितं यात्रिवरैरनेकैः ।। ७ ।।

आस्तामियं गौरवपूर्णगाथा
प्राचीनभव्योज्ज्वलभारतस्य ।
यन्नव्यवैदेशिकसूरिवर्यै–
रुद्घोषितं तत्स्मरणीयमत्र ।। ८ ।।

" भूमण्डलेऽहं यदि मार्गयेयं
स्वर्गायमानं विषयं सुधन्यम् ।
यत्र प्रकृत्या निजरूपसम्प–
न्नूनं विकीर्णा खलु मुक्तहस्तम् ।। ९ ।।

यस्मिन् कृतो मानुषमानसेन
देवोपहारीकृतदिव्यशक्तेः ।
अत्यद्भुताश्चर्यकरो विकासो
रहो गभीरं निपुणं वगाह्य ।। १० ।।

मानुष्यदुर्बोधमहासमस्याः
समाहिता गूढतमाः सलीलम् ।
यद्विस्मिताः स्युः खलु काण्टशिष्याः
प्लेटोसमप्राज्ञवरानुगाश्च ।। ११ ।।

यूनानरोमादिविमर्शपुष्टा
अद्यापि तां जीवनदायिशक्तिम् ।
सत्प्रेरणां चाप्य विधित्सवश्चेत्
स्वजीवनं दिव्यमहोच्चभावम् ।। १२ ।।

यशोन्वितं सर्वजनीनमेव
सम्प्लावितं चात्मिकदिव्यशक्त्या ।
न भारतादन्यत एति दृष्टि-
रित्याघुषन्मूलरनामधीमान्" ।। १३ ।।

" ग्रन्थस्य कस्यापि समस्तलोके
पाठो न तादृग् हृदयङ्गमोऽस्ति ।
कल्याणकृच्चोन्नयनैकहेतु-
र्यादृग् हि नामोपनिषद्वराणाम् ।। १४ ।।

स एव मे जीवनशान्तिहेतु-
र्भवेच्च मृत्योरपि मे स एव ।"
इत्यब्रवीच्छोपनहावरोऽपि
शार्मण्यदेशीयमहाविपश्चित् ।। १५ ।।

प्रामाण्यमस्यैव समीहितं चेद्
दीर्घायुषा मे समुदं ददामि ।
संसारधर्माध्ययनारतेन
प्रोवाच धन्यः खलु मूलरोऽसौ ॥ १६ ॥

इत्थं हि संसारदिगन्तभागा-
दुदात्तचारित्र्यसुधर्मशिक्षाम् ।
जिघृक्षवो धर्मतृषार्तलोकाः
सम्प्रापुरत्र भ्रमरा इवाब्जम् ॥ १७ ॥

विलोक्य तस्यैव दिगन्तकीर्ते-
र्देशस्य कष्टां स्थितिमद्य शोच्याम् ।
रुदन्ति देवा अपि दुःखतप्ता-
स्ततो नराणां किमु वर्णनीयम् ॥ १८ ॥

पर्याप्तमन्नं न जलं न वासः
सामान्यलोकाय सुलभ्यमद्य ।
सौविध्ययुक्तानि गृहाणि दूरे
कुट्योऽपि सामान्यजनैर्न लभ्याः ॥ १९ ॥

ऐश्वर्यसम्पन्ननिकेतनेषु
वसन्ति केचिद् बहुभूमिकेषु ।
कुबेरकल्पाः सुखसम्भृतेषु
हर्षप्रमोदान् खलु निर्विशन्तः ॥ २० ॥

उत्तुङ्गसौधेषु वसन्त एव
जना उदात्तोज्ज्वलचारुवेषाः ।
उदारवाचोऽपि सुसभ्यमन्याः
भवन्ति संस्कारविचारदीनाः ॥ २१ ॥

सर्वोच्चविद्यापदवीं दधाना
महाकुलीनाः सधना युवानः ।
गर्ह्याणि पापानि समाचरन्तो
भवन्ति भीता न च लज्जिताश्च ॥ २२ ॥

अभ्यङ्करो नाम जगत्प्रसिद्धः
पुण्यस्थवैयाकरणोऽतिवृद्धः ।
छात्रैर्हतो निष्करुणं सभार्यो
दग्धस्य वित्तस्य कृते धिगेतत् ॥ २३ ॥

मद्यादि पातुं न धनं ददाना
मातामही काऽपि हता स्वनप्त्रा ।
अन्येन केनापि धनस्य हेतोः
पुण्यस्थबालेन हतः स्वतातः ॥ २४ ॥

तत्रैव कस्मिन्नपि भोज्यकक्षे
मदोद्धताभ्यां पुरपालकाभ्याम् ।
प्रसह्य नार्यः परिधर्षिताश्च
वृत्यैव सस्यं खलु भक्षितं हा ! ॥ २५ ॥

उद्दण्डविद्रोहिजनैश्च छात्रैः
स्वगर्हितस्वार्थसमर्जनाय ।
सन्धाय राष्ट्रस्य विपक्षिसार्धं
प्रचालितं निर्ममघातसत्रम् ॥ २६ ॥

राष्ट्रस्य भाग्योदयसाधिकारा
अमात्यसंसज्जनशास्तृवर्याः ।
स्वार्थार्चका भ्रष्टपथप्रवृत्ता
भवन्ति राष्ट्रस्य विरोधिभूताः ॥ २७ ॥

हिंसाघृणाचौर्यवितथ्यवादाः
स्वार्थार्चना भ्रष्टपथानुसारः ।
पूर्वं ह्यभूवन्नपवादभूता
हा हन्त ! जाता नियमा इदानीम् ॥ २८ ॥

अर्थं ह्यभूत् साधनमेव पूर्वं
साध्यस्य सामाजिकसौख्यसिद्धेः ।
वित्तं तु साध्यं खलु जातमद्य
तस्माज्जना वित्तपरा भवन्ति ॥ २९ ॥

मोक्षार्थमासीत् खलु धर्मसिद्धि-
र्धर्मार्थमास्तां ननु वित्तकामौ ।
धर्म्यावतस्तावुभयावपीष्टौ
नोचेदनर्थोऽपरिहार्य एव ॥ ३० ॥

उद्दामनिर्यन्त्रितवित्तकामौ
धर्मप्रतीपौ च निरङ्कुशौ च ।
त्रैलोक्यवैक्लव्यरुजार्तिमूलं
कूलङ्कषा निर्झरिणी न भूत्यै ॥ ३१ ॥

शारीरसौख्यावहवस्तुपूर्णे
वैज्ञानिकाभ्युदयशृङ्गरूढे ।
देशे न कश्चिन्न सुखी न शान्तः
सर्वत्र हा हा कृतिरेव दृश्या ॥ ३२ ॥

अभ्रङ्कषात्यन्तिकमूल्यवृद्ध्या
भ्रष्टप्रजापीडकशास्तृकृत्यैः ।
त्रस्तैर्हि सामान्यजनैः कथञ्चित्
कृच्छ्रेण लोके क्रियतेऽसुयात्रा ॥ ३३ ॥

उत्कोचदानेन विना न किञ्चित्
कुत्रापि कार्यं भवतीह देशे ।
लभ्यं न कुत्रापि विशुद्धवस्तु
सर्वत्र साम्राज्यमसाधुतायाः ॥ ३४ ॥

वित्तं न कस्यापि न जीवितं च
नारीजनानां च सतीत्वमेव ।
मानं न शीलं न पवित्रता च
संरक्षितं भाति न किञ्चिदद्य ॥ ३५ ॥

महर्षिवर्याध्युषितार्यभूमि–
विश्वस्य चारित्र्यगुरुर्वरिष्ठः ।
विदुष्टपापासुरवृत्तिलक्ष्यं
कथं बभूवेति विचारणीयम् ॥ ३६ ॥

इयं हि नः सार्धशताब्दकाले
ह्यनात्मवादाश्रितभोगमूल– ।
पाश्चात्यलोकायतसभ्यताया
अन्धानुकारस्यकरालसिद्धिः ॥ ३७ ॥

प्राचीनभव्योज्ज्वलसंस्कृतेर्नो
जीवातुभूतानि च शाश्वतानि ।
तत्त्वानि लोकैः खलु विस्मृतानि
तस्यावश्यंभाविविपाक एषः ॥ ३८ ॥

अस्मन्महासंस्कृतिमूलतत्त्व–
मुद्घुष्टमासीन्मुनिसार्वभौमैः ।
यच्चेतनाचेतनविश्वमेतद्
व्याप्तं च सृष्टं परमात्मनैव ॥ ३९ ॥

सर्वेऽपि तस्यैव भवन्ति पुत्राः
सर्वज्ञसर्वेश्वरसर्वगस्य ।
आत्माऽपि सर्वेषु समानरूपः
सौभ्रात्रमस्मात्सहजं समेषाम् ॥ ४० ॥

ब्रह्माण्डपिण्डौ परिदृश्यमानौ
नैकान्तिकौ पूर्णयथार्थसत्यौ ।
पश्चात्तयोर्यत्परमात्मतत्त्वं
तदेव नित्यं परमार्थसत्यम् ॥ ४१ ॥

विश्वं विलोक्यापि हि विश्वमूलं
देहं विलोक्यापि च देहमूलम् ।
स्मृतेर्न सार्यं मनुजेन नून-
मित्येव नः संस्कृतिमूलतत्त्वम् ॥ ४२ ॥

शरीरमात्रं नहि मानवोऽयं
देहात्मनोः संहतिरेव मर्त्यः ।
देहात्परं चेतनमात्मतत्त्व-
मतो न भाव्यं तनुमात्रलक्ष्यैः ॥ ४३ ॥

किन्त्वद्य चार्वाकपथप्रवृत्ता
अनाद्यनन्तामरनिर्विकारम् ।
आत्मानमानन्दमयं विहाय
भवन्ति देहार्चनमात्रसक्ताः ॥ ४४ ॥

अभद्रभद्राखिलवासनानां
शुभाशुभाशेषमनोरथानाम् ।
पूर्तिः समेषामविवेकपूर्वं
नरं नयत्याशु पशुत्वभावम् ॥ ४५ ॥

पशुत्वभावः सहजो नराणां
तस्मात्तदीयोन्नयनं नरत्वम् ।
ततश्च नारायणरूपसिद्धि-
रुच्चैस्तमं संस्कृतिलक्ष्यमेतत् ॥ ४६ ॥



अशेषसम्पद्धनधान्यपूर्णे
वैज्ञानिकोत्कर्षशिखाधिरूढे ।
अमेरिकानामसमृद्धदेशे
जना न तुष्टा न च शान्तियुक्ताः ॥ ४७ ॥

ऐश्वर्यरत्नाकरसन्निमग्नाः
समस्तसम्भाव्यसुखोपपन्नाः ।
तथापि तत्रस्थजना गुडाकां
विना न निद्रागुलिकां लभन्ते ॥ ४८ ॥

हिंसाऽऽत्महत्यावधवातुलानां
प्रमाणमात्यन्तिकवर्धमानम् ।
निदर्शनं नाम सुखस्य तेषा-
मुद्दामभोगा न सुखाय नूनम् ॥ ४९ ॥

स्वार्थार्चकाः भौतिकवादनिघ्ना-
स्त्यजन्ति वृद्धौ पितरौ युवानः ।
विवाहविच्छेदपराश्च नूनं
स्वपूर्वसन्तानमपि त्यजन्ति ॥ ५० ॥

अनात्मवादैहिकवादनिष्ठा
नग्नार्थकामोपहतात्ममेधाः ।
अन्यानपेक्षात्महितैकचिन्ता
निरर्गला नागरिका भवन्ति ॥ ५१ ॥

अर्थेन लभ्यानि यदा भवन्ति
सर्वाणि मानास्पदसौविध्यानि ।
अर्थप्रधानेऽपि च राजतन्त्रे
स्पष्टं जना अर्थपरा भवन्ति ॥ ५२ ॥

अनेन केनापि शुभाशुभेन
मार्गेण वित्तार्जनमेव लक्ष्यम् ।
सम्पद्यते मानवजीवनस्य
तत्रावकाशो नहि धर्मनीत्योः ॥ ५३ ॥

महोच्चमानार्हपदाधिरूढाः
शालीनसम्मानितसभ्यमन्याः ।
विद्याविदग्धा अपि वित्तमूढा
जना अकार्याणि समाचरन्ति ॥ ५४ ॥

नराधमैर्यौतुकलाभहेतोर्भार्या
नवोढा निहताः स्नुषाश्च ।
अन्यैश्च राष्ट्रीयनिगूढगुह्यं
पणायितं वैरिगणाय गुप्तम् ॥ ५५ ॥

देहातिरिक्तं च विविक्तमन्य-
च्चिदात्मतत्त्वं नहि मन्यमानाः ।
जना हि वैरोचनबुद्धियुक्ताः
किं धर्मतत्त्वानि समाचरेयुः ॥ ५६ ॥

नान्त्या समस्या मनुजस्य वित्तं
नरो न भूतात्मकदेहमात्रः ।
अन्तर्गतं तस्य चिदात्मतत्त्वं
तदेव मुख्यं न धनैकतृष्यम् ॥ ५७ ॥

विश्वं प्रकृत्या न विकारमात्रं
नूनं मनुष्यो न शरीरमात्रम् ।
पश्चात्प्रकृत्याः परमात्मतत्त्वं
तथाऽऽत्मतत्त्वं वपुषोऽस्ति पश्चात् ॥ ५८ ॥

व्याप्ता त्रिलोकी परमात्मशक्त्या
व्याप्तं वपुश्चापि तथात्मशक्त्या ।
सत्ता द्वयोश्चेतनयोर्यथार्था
तस्माद्धि लिप्तैर्जडयोर्न भाव्यम् ॥ ५९ ॥

भोगैर्विना नैव शरीरयात्रा
ततो न भोगा नितरां प्रहेयाः ।
आत्मानमाभ्यन्तरमुख्यतत्त्वं
विस्मृत्य भाव्यं न तु भोगलिप्तम् ॥ ६० ॥

दृश्या यथा संसृतिरस्ति सत्या
सत्यो वियोगोऽपि तथैव तस्या
स्थेयं मनुष्यैरत एव तस्यां
निर्लिप्तभावं सरसीव पद्मम् ॥ ६१ ॥

आकण्ठभोगाब्धिनिमग्नलोका
दूरेऽस्तु सन्तोषसुखानुभूतिः ।
भवन्ति निर्वेदघृणाभिभूताः
निःसीमभोगा हि सुखाय नैव ॥ ६२ ॥

सीमातिरिक्ता विषयोपभोगाः
कुर्वन्ति भोगं ह्युपभोक्तुरेव ।
भोगो वरं त्यागपुरःसरोऽस्ति
त्यक्तेन भोक्तव्यमिति श्रुतिर्हि ॥ ६३ ॥

भोगेन भोगः खलु सीमितोऽस्ति
त्यागेन भोगस्त्वमितो विशालः ।
तत्त्यागपूर्वो विषयोपभोगो
ह्याश्यन्तरामन्दसुखैकहेतुः ॥ ६४ ॥

स्वार्थं विहायापि परार्थसिद्ध्यै
दिवानिशं ह्युद्यमिनो लभन्ते ।
शान्तिं सुखं दिव्ययशश्च लोके
तत्त्यागसिद्धिर्न तु भोगलब्धिः ॥ ६५ ॥

सम्पत्तिवादोऽपि च साम्यवादः
सामन्तवादश्च समाजवादः ।
वित्तं मनुष्यस्य समामनन्ति
मुख्यां समस्यां परमं च साध्यम् ॥ ६६ ॥

क्षुत्तृट्प्रशान्तेः समनन्तरं कि-
माध्यात्मिकी नास्ति नरस्य वाञ्छा ।
देहादृते किं मनुजो न किञ्चित्
किं देहनाशेन नरस्य नाशः ? ॥ ६७ ॥

आहारनिद्रादिकभौतिकानां
प्रयोजनानामपि पूरणेन ।
तुष्टा न केचित्सततं यतन्ते
ह्युच्चैस्तरं साधयितुं परार्थम् ॥ ६८ ॥

तृष्णाबुभुक्षादिकवासनानां
त्यागं विधायापि परोपकारम् ।
कर्तुं महद्भिर्यतितं सदैव
प्राणार्पणेनापि सहर्षमत्र ॥ ६९ ॥

गान्धीदयानन्दमसीहबुद्धैः
स्वार्थं विहायपि परार्थमेव ।
सहर्षमात्मार्पणमाचरद्भिः
किमत्र लेभे न दिगन्तकीर्तिः ॥ ७० ॥

स्वार्थार्पणेनापि परार्थसिद्धिः
क्लेशान् सहित्वापि परोपकारः ।
त्यागोपि भोगाद् ग्रहणाच्च दानं
सर्वैश्च सर्वत्र समाद्रियन्ते ॥ ७१ ॥

अन्त्याऽत्र सत्ता परमात्मनश्चेद्
देहेऽपि चेदात्मन एव मुख्या ।
भोग्याऽत्र निष्कामनिरीहवृत्त्या
नूनं त्रिलोकीति यथार्थमार्गः ॥ ७२ ॥

सत्यं दयास्नेहपरोपकाराः
अक्रोधशौचेन्द्रियनिग्रहाश्च ।
आध्यात्मतत्त्वानि भवन्ति नूनं
त्रैलोक्यशान्त्यावहपावनानि ॥ ७३ ॥

संस्थापनार्थं स्थिरविश्वशान्ते-
र्विश्वैक्यबन्धुत्वकुटुबितानाम् ।
घोषो हि सर्वत्र विधीयतेऽद्य
नाध्यात्मतत्त्वानि विना तु शक्यम् ॥ ७४ ॥

एतन्महामौलिकतत्त्वजातं
मान्यं न तैर्भौतिकवादिमन्यैः ।
यैः केवलं स्वार्थपरैः शरीरात्
तत्त्वान्तरं स्वीक्रियते न किञ्चित् ॥ ७५ ॥

नैवेश्वरो नैव च सृष्टिकर्ता
लोकान्तरं नैव च नान्यजन्म ।
अत्रैव जन्मापि च मृत्युरत्र
ह्येवं गते धर्मकथैव नास्ति ॥ ७६ ॥

इत्थंगते भौतिकवादिमन्यः
स्वार्थार्थमेवात्र करोति कार्यम् ।
स्वार्थार्थमेवान्यहितं करोति
स्वार्थोपकाराय परोपकारम् ॥ ७७ ॥

प्राबल्यमस्मात्खलु सम्बभूव
सर्वत्र कामान्धधनातुराणाम् ।
दुर्वृत्तजाल्माधमलुण्ठकानां
हिंसाघृणापापकृतां समाजे ॥ ७८ ॥

सम्पूर्णमानुष्यविनाशहेतो-
रणवस्त्रयुधस्य विभीषिकाभिः ।
सन्त्रस्तविश्वस्य विमोचनाय
नूनं न विध्यन्तरमस्ति किञ्चित् ॥ ७९ ॥

चैतन्यमन्यन्नहि चेच्छरीराद्
दृश्यान्न विश्वाज्जगदात्मतत्त्वम् ।
अस्मान्न जन्माज्जननान्तरं चेद्
हर्षप्रमोदान्नहि लक्ष्यमन्यत् ॥ ८० ॥

निष्पत्तिरस्यैव भयावहस्य
निरात्मवादाश्रितदर्शनस्य ।
यन्नाम सर्वत्र विमुक्तराज्यं
हिंसाघृणाचौर्यविलुण्ठनानाम् ॥ ८१ ॥

सत्यक्षमाशान्तिपरोपकारा
अस्तेयदाक्षिण्यदयानुरागाः ।
हास्यास्पदं ह्येव भवन्ति लोके
कस्मै किमर्थं खलु पालनीयाः ॥ ८२ ॥

ऊर्ध्वं हि मृत्योर्यदि शून्यमेव
समाजकल्याणकथाऽपिमिथ्या ।
अन्तोऽपि मे चेत्सह मृत्युनैव
कल्याणचिन्ता किमु कस्य हेतोः ॥ ८३ ॥

अनात्मवादोपहतेन तेन
मत्वा जयं प्राकृतिकं स्वलक्ष्यम् ।
प्रचण्डविज्ञानसहायकेन
ह्यभूतपूर्वोऽभ्युदयः प्रपेदे ॥ ८४ ॥

समस्तनैसर्गिकभूतशक्ती-
र्जित्वा नरेणारचितानि ताभ्यः ।
यानानि वायोरपि वेगवन्ति
चाण्वस्त्रशस्त्राणि भयङ्कराणि ॥ ८५ ॥

तडित्प्रदीपोज्ज्वलसव्यजानि
दूरेक्षणाकाशगिरान्वितानि ।
वातानुकूलानि सुखावहानि
तुङ्गानि हर्म्याणि विनिर्मितानि ॥ ८६ ॥

मानुष्यसौविध्यसुखावहानि
नानाविधात्यद्भुतसाधनानि ।
विचित्रयन्त्राणि विनिर्मितानि
मानुष्यमस्तिष्कचमत्कृतिर्नु ॥ ८७ ॥

उच्चैस्तमं भौतिकभूतिशृङ्गं
प्राप्यापि सौख्यं न नरः प्रपेदे ।
अशान्तिदुःखानलदह्यमानो
हा हन्त ! दूरं स सुखात्प्रयाति ॥ ८८ ॥

स्वान्तर्गतं शान्तिसुखस्य केन्द्र-
मात्मानमानन्दमयं विहाय ।
सौख्यं न केनापि कदापि लभ्यं
जलं न लभ्यं मृगतृष्णिकायाः ॥ ८९ ॥

एतद्धि भूमण्डलसभ्यतायै
अस्मन्महामौलिकयोगदानम् ।
यद्विश्वशान्त्यैक्यसुखोपलब्धि-
राध्यात्मवर्जं न कदापि शक्या ॥ ९० ॥

वित्तेन भूतात्मकदेहशान्ति-
र्नाध्यात्मिकी भौतिकसाधनेन ।
अतः श्रुतीनामुपदेश एव
न तर्पणीयो मनुजो धनेन ॥ ९१ ॥

प्राप्तव्यमाध्यात्मिकशान्तिरेव
तत्साधनं भौतिकभूतिसौख्यम् ।
उभेऽनिवार्येऽपि च मुख्यगौणे
आत्मैव साध्यं करणं शरीरम् ॥ ९२ ॥

किन्त्वद्य जातं विपरीतमेव
शरीरमेवाद्य बभूव मुख्यम् ।
तस्यैव सन्तर्पणसन्निमग्नाः
शरीरिणं चापि विहाय सर्वे ॥ ९३ ॥

उत्तुङ्गसौधेषु वसन् मनुष्यः
क्षौमौर्णवासांसि वसान एव ।
स्पृशन् विमानेन च चन्द्रलोकं
भात्यद्य संस्कारचरित्रहीनः ॥ ९४ ॥

आरुह्य यानानि महाजवानि
करोति चेत्प्राणधनापहारम् ।
धावन् विमानेन च निर्मलेषु
ह्यस्त्राणि संवर्षति चेत् फलं किम् ॥ ९५ ॥

भूतानि पञ्चापि जितानि तेन
न स्वान्तरस्थः षडरातिवर्गः ।
चन्द्रो जितस्तेन नभस्तलस्थो
न स्वान्तरस्थस्तु मनोमृगाङ्कः ॥ ९६ ॥

समस्तभूतानि विजित्य तेन
प्रचण्डवैज्ञानिकशक्तिसिद्धया ।
न्यूनीकृतं कालदिगन्तरालं
नरान्तरालं तु महत्प्रवृद्धम् ॥ ९७ ॥

पक्षीव नाके डयते स मुक्तं
विगाहते मीन इवाम्बुराशिम् ।
नरैस्तु वस्तुं भुवि नैव वेत्ति
स्नेहानुरागं च सबन्धुभावम् ॥ ९८ ॥

प्रत्येति कस्मिन्नपि कोऽपि नैव
न कोऽपि कस्मिन्नपि रज्यते च ।
हिंसाघृणाऽऽतङ्कभयादिकानां
सर्वत्र पर्यावरणं प्रपञ्चे ॥ ९९ ॥

आत्मेन्द्रियाणां विजयं विनैव
कल्याणकारी न जयः प्रकृत्याः ।
विश्वस्य नाशाय भवेद् ध्रुवं तद्
यद् धर्मबुद्ध्या न समन्वितं स्यात् ।। १०० ।।

प्राचीनदेवर्षिमुनिप्रकाण्डै-
रनादिकालात् सुविचारपूर्वम् ।
उद्घोषितं तत्त्वमिदं वरिष्ठ-
मात्मातिरिक्तं न सुखं यथार्थम् ।। १०१ ।।

आत्यन्तिकी भौतिकसौख्यसिद्धिः
कामं सुलभ्या विजयात्प्रकृत्याः ।
सम्पूर्णसाम्राज्यमपि त्रिलोक्याः
किन्त्वात्मशान्तिः सुतरामशक्या ।। १०२ ।।

इत्थं बभाषे मुनियाज्ञवल्क्यो ।।
यथार्थकल्याणमभीप्सुपत्न्यै ।
यमोऽनुशासन्नचिकेतसे च
सनत्कुमारोऽपि च नारदाय ।। १०३ ।।

अस्यैव तत्त्वस्य महानुभूतिः
स्वजीवने किं क्रियते न सर्वैः ।
ऐश्वर्यसम्पत्तिसुखाप्लुतेऽपि
नाध्यात्मशान्तिर्न सुखप्रतीतिः ।। १०४ ।।

नादीरतैमूरसिकन्दराणां
धनाप्तये विश्वविलुण्ठकानाम् ।
तथैव साम्राज्यधुरन्धराणां
भिन्ना कथा नास्ति दुरन्तभाजाम् ।। १०५ ।।

शान्तिं परां भद्रमवाप्तुकाम-
रात्मैव वेद्यो मनसा विभाव्यः ।
तेनैव दुःखोपशमोऽपि नून-
मित्थं हि शास्त्राणि समामनन्ति ।। १०६ ।।

धावन्ति नद्यो जलधिं स्वकेन्द्रं
सूर्यं प्रयात्यग्निशिखाऽऽत्मकेन्द्रम् ।
उत्क्षिप्तलोष्ठोऽपि धरां प्रयाति
प्रेप्सुस्तथाऽऽत्मा परमात्मतत्त्वम् ।। १०७ ।।

आत्मा स्वयं साधनरूपदेहं
धृत्वाऽस्ति लिप्सुः परमात्मतत्त्वम् ।
तदेव तस्यास्ति परं निधानं
साध्यं च गन्तव्यपदं तदेव ।। १०८ ।।

मन्तव्यमेतन्न पुराणकाले
विज्ञानवृद्धिर्न तथा बभूव ।
यथा वयं संप्रति भावयाम-
स्तथ्यं तु नूनं विपरीतमेव ।। १०९ ।।

विज्ञाननिष्ठैरपि भारतीयै-
र्नैवात्मतत्त्वेन विहीनभूतम् ।
अतो न तैर्दुःखसमुद्रमग्नं
सर्वोच्चविज्ञानशिखां स्पृशद्भिः ।। ११० ।।

मानुष्यसर्वांगसमुन्नतिर्वै
धर्मस्य साध्यं भवतीति हेतोः ।
वैज्ञानिकोत्कर्षमपीह नूनं
धर्माद् बहिर्नैव विकल्पनीयम् ।। १११ ।।

ब्रह्माण्डविध्यध्ययनं सुसूक्ष्म
विज्ञानशास्त्रप्रमुखाभिसन्धिः ।
विधातृविध्यन्वयमार्गणं च
धर्मस्य कार्यं न मिथो विरोधः ॥ ११२ ॥

ब्रह्माण्डसर्वोच्चविधातृशक्त्यां
श्रद्धा नराणां भुवि धर्ममूलम् ।
तत्प्रेरिताचारविचारजातं
लब्धप्रतिष्ठं भुवि धर्मनाम्ना ॥ ११३ ॥

चराचरव्यापकविश्वशक्ते-
श्चित्तेऽनुभूत्याऽखिलभूतमात्रैः ।
सौभ्रात्रसौहार्दसहानुभूति-
र्यथार्थधर्मो भुवि मानवानाम् ॥ ११४ ॥

सत्यक्षमाशान्तिपरोपकाराः
अक्रोधविद्याविनयानुरागाः ।
भूतानुकम्पा नियमा यमाश्च
त्रैलोक्यसन्धारकधर्मतत्त्वम् ॥ ११५ ॥

विज्ञानधर्मौ न मिथो विरुद्धौ
परस्परं पूरकमित्रभूतौ ।
यत्रोभयौ सञ्चरतः सखायौ
विश्वैक्यकल्याणसुखानि तत्र ॥ ११६ ॥

विनम्रभावेनविहीनविद्या
सौरभ्यहीनं कमनीयपुष्पम् ।
धर्मेण हीनं च मनुष्यजन्म
व्यर्थानि सर्वाणि भवन्ति लोके ॥ ११७ ॥

१-५-८६

# लाजपततरङ्गिणी

स्वर्गस्य खण्ड इव भूमितलावतीर्णो
मानुष्यकेण किमु देवगणैरपीड्यः ।
दीक्षागुरुर्हि जगतः खलु भारताख्यो
देशो बभूव परवान् ननु कालयोगात् ।। १ ।।

आङ्ग्लाधिराज्यखलशासनदास्यपङ्के
मग्नं चिराय हतभारतवर्षदेशम् ।
उध्दृत्य वैभवपदं प्रति रोहयन्तो
वीरा बभूवुरतिधैर्यधना महान्तः ।। २ ।।

तेष्वेव धैर्यधनधीरधुरन्धरेषु
सर्वस्वहोमिबलिदानिमतल्लिकासु ।
पञ्चाम्बुकेसरिपदं कलयन्नृसिंहः
जातः स लाजपतराय इति प्रसिद्धः ।। ३ ।।

तस्यैव विक्रमरसैकगुणास्पदस्य
सत्प्रेरणास्फुरणदायिसुरम्यगाथाम् ।
जन्मोत्सवे शततमेऽद्य लिखामि किंचि-
च्छ्रद्धाञ्जलिं च मनसा विनतोऽर्पयामि ।। ४ ।।

लुध्यानमण्डलगते धुडिकेऽभिसंज्ञे
ग्रामेऽभवच्चरितनायकजन्म राधा-
कृष्णाख्यशिक्षकवरस्य निकेतनेऽब्दे
ह्येकोणविंशशतकस्य च पञ्चषष्टे ।। ५ ।।

काव्योन्मेषः

धर्मप्रिया पतिपरायणसाधुवृत्ता
सद्वत्सला सनियमा च निरक्षराऽपि ।
आसीत्तदीयजननी हि गुलाबदेवी
यच्छीलचारुचरिताङ्कितजीवितोऽभूत् ।। ६ ।।

लक्ष्मीकटाक्षपरिवञ्चितजीवितोऽपि
सम्मानहीनलघुशिक्षकजीविकोऽपि ।
विद्याऽनुरागिविमलोज्ज्वलवृत्तधारी
तस्याभवज्जनयिता जननी च साध्वी ।। ७ ।।

प्राचीनवैदिकसनातनधर्ममूढो
दीक्षां हि मुस्लिममतस्य जिघृक्षमाणः ।
व्यावर्तितः स किल साञ्जलिधर्मपत्न्या
तत्क्रोडदीनविलपच्छिशुना च तेन ।। ८ ।।

मेधावितीक्ष्णधिषणो जगृहे स बाल्ये
तत्प्रान्तलोकविदिताः सकला हि भाषाः ।
देश्यास्तथा ह्यरबफारसदेशजन्या
वक्ता बभूव कुशलश्च खलूर्दुवाण्याः ।। ९ ।।

लब्ध्वा विधिज्ञपदवीं बहुमानपूर्वं
तत्कालशिक्षितजनाश्रितसर्वमान्याम् ।
वृत्तिं स मानधनदां विधिपण्डितस्य
प्रारब्धवान् सुविदिते नगरे हिसारे ।। १० ।।

वित्तार्जनाय नहि तस्य बभूव जन्म
दीनार्तिहारिसदयं हृदयं तदीयम् ।
दृष्ट्वा विपत्तिजलधौ विषयं निमग्नं
दुःखाग्नितप्तमभवच्छतधा विदीर्णम् ।। ११ ।।

लोकोपकारपरमा प्रकृतिर्गुरूणां
तुष्टा भवेन्नहि कदापि निजात्मतुष्ट्या ।
स्वान्तःसुखाय जलदा न जलं वहन्ति
वायुर्न वा सततमात्महिताय वाति ॥ १२ ॥

पञ्चाम्बुमण्डलमभून्नितरां तदानी-
मान्दोलितं मुखरितं प्रतिनादितं च ।
राष्ट्रीयभावभरितार्यसमाजसंस्था-
प्रक्षोभकारिविम ोज्ज्वलभावनाभिः ॥ १३ ॥

आकृष्टसर्वयुवमण्डलसंस्थयाऽसौ
तिष्ठेत्कथं विघटितो युवकाग्रनेता ।
श्रीहंसराजगुरुदत्तसुहृत्समेत-
स्तस्या बभूव सदसो युवकः सदस्यः ॥ १४ ॥

तत्राभवत्स कमनीयगुणैरनेकैः
पञ्चाम्बुमण्डलगतार्यसमाजनेता ।
केन्द्रं च लोकहितकारिविचेष्टितानां
नानाप्रकारशुभयोगसमन्वितानाम् ॥ १५ ॥

भक्तोत्तमेन यतिराजवरस्य तेन
श्रुत्वा तदीयनिधनं सहसा सखेदम् ।
शोकाभिभूतमनसा ननु शोकगोष्ठ्यां
यन्मार्मिकं निगदितं तदपूर्वमासीत् ॥ १६ ॥

अस्तं याते यतिवरदयानन्दभानावकस्मा-
न्नूनं मग्ना सकलजनता शोकसिन्धावगाधे ।
स्थाने स्थाने जनपरिषदः सङ्गताः स्मारकार्थं
लाहोरेऽपि प्रवरयमिनो भक्तवर्याः समीयुः ॥ १७ ॥

श्रीहंसराजगुरुदत्तसुहृत्समेत–
स्तत्स्मारकं स्थिरतमं प्रविधातुकामः ।
प्रस्तावमेकमकरोत्स हि शिक्षणस्य
डी. ए. वि. शिक्षणसभा च सुनिर्मिताऽभूत् ॥ १८ ॥

विद्यालयाय धनमाप्तुमसौ चचार
तद्धीरचारुमधुरं वचनं निशम्य ।
लोका हि दानमददुर्ननु मुक्तहस्तं
चाभूषणानि ललना ददिरेऽविलम्बम् ॥ १९ ॥

सर्वेषु लोकसवनेषु बलिस्तदीयः
सर्वाधिकश्च विपुलः प्रथमं पपात ।
साफल्यमापदत एव तदीयकार्यं
दानं तदेव हि यदात्मगृहात्प्रवृत्तम् ॥ २० ॥

प्रारम्भिकं सकलजीवनमेव तस्य
नूनं बभूव हविरार्यसमाजयज्ञे ।
तस्मात्स पाठमपठज्जनसेवकस्य
तत्रैव निर्मितिरभूद् वरजीवनस्य ॥ २१ ॥

कार्तज्ञ्यभावभरितं स हि भाविकाले
आविश्चकार सुभगो हृदयं विशालम् ।
ग्रन्थं विलिख्य गुरुमार्यसमाजसंज्ञं
संस्थां च तां स्वजननीं बहुशः प्रकाश्य ॥ २२ ॥

देशं विधित्सुरनघं परदास्यमुक्तं
शिक्षाप्रसारपरिसीमितकार्यमल्पम् ।
मत्वा विवेश मतिमान् खलु राजनीत्यां
स्वातन्त्र्यहीनमनुजस्य स एव धर्मः ॥ २३ ॥

आसीत्तदा भारतराष्ट्रसभा विभक्ता



सौम्योग्रभागयुगले नितरां विशिष्टे ।
श्रीगोखले समभवत् प्रथमस्य नेता
विख्यातकीर्तितिलकश्च तथापरस्य ।। २४ ।।

युक्त्या च मन्दगमनेन च सामपूर्वं
प्राप्यं स्वराज्यमिति सौम्यदलाभिधेयम् ।
शक्त्या च शीघ्रगमनेन च दण्डपूर्वं
प्राप्यं तदेव नचिरादिति चण्डमार्गः ।। २५ ।।

लालस्तु मध्यमगतिः प्रथमं ह्यपक्षो
विश्वासभूमिरुभयोरपि पक्षयोः सन् ।
शाठ्यं निरीक्ष्य बहुशः खलशासनस्य
कालान्तरेण तिलकस्य बभूव पक्ष्यः ।। २६ ।।

पुण्ये प्रयागनगरे यमुनातटाके
राष्ट्रीयपक्षसमितेरुपवेशने सः ।
जग्राह भागमुदितो नभसीव भास्वा–
नाशागभस्तिरुदियाय जनान्तरङ्गे ।। २७ ।।

एकादशद्विगुणिताब्दवयाः स ऊचे
किञ्चित्सदोषवचनान्यधिकृत्य पत्रैः ।
"दुष्टांग्लिनाथ" इति यल्लिखितं सनिन्दं
तस्यान्तरङ्गजलधौ विदधे तरङ्गम् ।। २८ ।।

आङ्ग्ल्यां प्रभुत्वमचिरादियदाप्तवान् यत्
तस्यां सुविश्रुतकृतीः प्रणिनाय नैकाः ।
धाराप्रवाहमकरोद् बहुभाषणानि
वैदेशिका अपि बुधा यदतिप्रशंसुः ।। २९ ।।

शाठ्याभिभूतपरशासनग्रस्तपूर्वं
लोकं ततोऽधिकतरं परिबाधमानः ।
तत्रागतः प्रतिभयो विकरालकालो
गण्डोपरीर्ममिव जातमिहाभिनूत्नम् ॥ ३० ॥

दुष्कालपीडितजना करुणातिदीनं
क्षुत्क्षामदेहविलपन्मृतबालवत्साः ।
मृत्योर्मुखे निपतिता बहुलक्षसङ्ख्या
रक्षाधिकारपुरुषेषु विलोकयत्सु ॥ ३१ ॥

वापीनदीनदसरोवरनिर्झराणि
जातानि वारिरहितानि च पङ्कवन्ति ।
शुष्काणि शाद्वलमयानि हरिद्वनानि
क्षेत्राणि सस्यहरितानि मरुस्थलानि ॥ ३२ ॥

कोटच्युत्तरा उपरता पशवो जनाश्च
ग्रामा हि निर्जनसमा अभवन्ननेके ।
संख्यातिगाश्च शिशवो जनकैर्विहीना
बद्धा मसीहजनयोजितकूटजाले ॥ ३३ ॥

दृश्यानि भीषणतमान्यवलोक्य तानि
दुःखाभितप्तहृदयः करुणार्द्रचेताः ।
भिक्षां ययाच धनिकान् पुनरेकवारं
प्रावर्तयत्प्रतिपुरं ह्युपकारशालाः ॥ ३४ ॥

धर्मान्तरेण शतशः खलु बालकानां
ह्रासोन्मुखाभिचलितां खलु हिन्दुजातिम् ।
गोप्तुं महद् यदकरोत्सदयः स लालः
नूनं सुवर्णमयवर्णसमर्ङ्कनीयम् ॥ ३५ ॥

भूकम्पघोरविपदाहृतकाङ्‌ड़ायां
निःसीमहानिरभवद्धनजीवनस्य ।
व्यात्तानना पुनरपि ग्रसनाय हिन्दून्
धर्मान्तराख्यदनुजा समुपस्थिताऽभूत् ॥ ३६ ॥

आर्ताश्रुमोचनपरः स्वयमेव लाल-
स्तत्रोपगम्य सखिभिः स उपाकरोत्तान् ।
मृद्राशिखातविधुरान् स्वयमुद्दधार
लोकोपकारपरमा हि सतां विभूतिः ॥ ३७ ॥

पञ्चाम्बुमण्डलगताम्बुकराभिवृद्धया
रोषानलोऽपि ववृधे कृषिजीविकानाम् ।
तत्रैव लायलपुरे सुविशालगोष्ठयां
लालोऽपि शासनविरुद्धमुवाच तीव्रम् ॥ ३८ ॥

मायाविराजपुरुषैर्जगृहेऽनिमित्तं
सम्प्रेषितो ह्यजितसिंहसमं सुगुप्तम् ।
दूरं स माण्डल इति प्रथिते विवासे
सम्प्रापितश्च विविधां बहुबन्धपीडाम् ॥ ३९ ॥

अन्तःप्रसुप्त इव शासनवैरवह्निः
निर्वासनेन्धनसमिद्धसमुच्छिखोऽभूत् ।
जज्वाल लोकहृदयेषु च संदिधक्षुः
कौटिल्यपूर्णपरशासनजीर्णदावम् ॥ ४० ॥

पञ्चाम्बुचक्रपरिधिं सहसा विलङ्घ्य
दुर्वृत्तशासनकृतापकृतोपकारम् ।
व्याप्नोद्धि लाजपतरायपशो गरीयः
सम्पूर्णभारतभुवं निखिलं च विश्वम् ॥ ४१ ॥

आसेतुशैल[illegible]
क्षोभाम्बुधिं हि परितः परिदृश्य भीम् ।
भीतं च रोषभरितं च विदेशराज्यं
लालं मुमोच निभृतं ननु वर्षमध्ये ।। ४२ ।।

देशाटनं स विदधेऽखिलभारतस्य
सर्वत्रहर्षभरितामितलोकवृन्दैः ।
लाजाभिवर्षकुसुमैरभिनन्द्यमानो
नूनं ह्यभूत्सकलभारतवर्षनेता ।। ४३ ।।

सम्प्रेषितस्तदनु राष्ट्रसभाधुरीणै-
रिङ्गलण्डदेशमचिरात्सह गोखलेन ।
तत्रस्थतर्कसरणेः परिवर्तनाय
स्वातन्त्र्यदानविषये खलु भारतस्य ।। ४४ ।।

ओजोगुणान्वितमनोहरयुक्तिवन्ति
तत्र प्रदाय बहुसुन्दरभाषणानि ।
आवर्ज्य चात्मगिरयाऽऽङ्गलजनानुदारान्
स्वातन्त्र्यदुर्गमपथं सुगमं चकार ।। ४५ ।।

मुक्त्यन्तरं च परिवादकराङ्गलपत्रं
न्यायालयेऽभियुयुजे स विमाननार्थम् ।
तन्निष्कृतित्वसमवाप्तधनं विशालं
दानीचकार सकलं निजराष्ट्रकार्ये ।। ४६ ।।

निर्वाचनं स जितवान् पुरपालिकाया-
स्तल्लोकरागियशसो हि निदर्शनं तत् ।
यत्रान्धमूकबधिरा अपि तत्प्रसक्ताः
तच्चित्रहस्तमुदिता स्वमतं वितेरुः ।। ४७ ।।

जापानदेशमगमत्स ततोऽमरीका-


मासन्नसप्तशरदः स उवास तत्र ।
कुर्वन् प्रचारमनिशं निजदेशमुक्ते-
ग्रन्थान् बहूंश्च रचयन् जगति प्रसिद्धान् ॥ ४८ ॥

राष्ट्रीयभावरहिता असुसंस्कृताश्च
स्वत्वाधिकारवरणे नितरामयोग्याः ।
आरण्यकाश्च ननु सन्ति हि भारतीया
इत्याङ्गलतर्कसरणीं विफलीचकार ॥ ४९ ॥

तत्रैव तेन वसता लिखितं वरिष्ठं
ग्रन्थान्तरं तरुणभारतनामधेयम् ।
यत्राङ्गलराज्यकृतभारतवर्षनिन्दां
युक्तिप्रमाणसहितं शकलीचकार ॥ ५० ॥

आङ्गला बभूवुरतिरोषयुता अनेन
रुद्धौ च लाजपतरायपथप्रबन्धौ ।
लालस्तु कोटिमगमत्परमां सुकीर्त्याः
सम्मानभाजनमभूत्सकलेऽपि लोके ॥ ५१ ॥

प्रत्यागतः प्रथमविश्वरणोपरामे
प्रत्युद्गतः स परमादरयुक्तचित्तैः ।
लोकैः समाहितकुतूहलहार्दमोदै-
श्चन्द्रो यथा जगति सन्तमसावगूढैः ॥ ५२ ॥

कार्तज्ञ्यभावविनतैः स्वजनैः सहर्षै-
रध्यक्षभारवहनाय समर्थितः सन् ।
क्रिस्तीयविंशशतकस्य च विंशवर्षे
सम्पन्नराष्ट्रसमितेरभवद्धुरीणः ॥ ५३ ॥

वैशिष्टचपूर्णसमितेरुपदेशतोऽस्मिन्


गान्धीमहात्मरचितोऽसहयोगनामा ।
कार्यक्रमो भरतराष्ट्रसभाप्रशस्तः
सम्पूर्णराष्ट्रमभवच्च तडित्प्रविष्टम् ॥ ५४ ॥

सर्वत्र शासनकृताखिलकार्यजातैः
प्रस्तावितोऽसहयोगरणः प्रजाभिः ।
विद्यालयाः समभवन् पठनार्थिशून्याः
कार्यालयाश्च सकला जनताविहीनाः ॥ ५५ ॥

विद्यालयं सुविदितं तिलकाभिधेयं
राष्ट्रीयशिक्षणपरं समतिष्ठिपत् सः ।
निष्कामसेवकजनैकखनिं च सङ्घं
यन्निःसृता नरवरा बहुकीर्तिमन्तः ॥ ५६ ॥

हिंसां विलोक्य विपुलां किल चौरिचौर्यां
सत्याग्रहं व्यरमयत्स ततो महात्मा ।
बन्दीकृतश्च सहसा शठशासनेन
नैराश्यघोरतिमिरं प्रसृतं च देशे ॥ ५७ ॥

वैधानिकं च समरं प्रतिशासनं स
सञ्चालनाय गतवान् विधिमण्डलेऽपि ।
श्रीमोतिलालसहितः सुनिरूपितोऽभूत्
तस्मात् स्वराज्यमितिनूतनपक्षतोऽसौ ॥ ५८ ॥

अत्यल्पमुस्लिमजनैः किल गान्धीजीनां
सत्याग्रहे सहकृतं बहुभिर्विरुद्धम् ।
तेनाङ्ग्लशासनगणैरपि लाभहेतोः
प्रोत्साहिता मुसलिमा प्रतिहिन्दुबन्धून् ॥ ५९ ॥

तैराङ्ग्लनीतिमनसृत्य विभेदपूर्णां

विश्लिष्य हिन्दुजनतां खलु मुस्लिमेभ्यः ।
तेषां च मुस्लिममते परिवर्तनाय
जात्यन्धमुस्लिमजना बहुशः प्रयुक्ताः ॥ ६० ॥

जात्यन्धभक्तिपरमो न बभूव लालः
स्वाधीनताप्तिपरिरक्षणहेतुभूतम् ।
ऐक्यं नितान्तमनिवार्यममंस्त विज्ञो
देशस्य मुख्यतममुस्लिमहिन्दुजात्योः ॥ ६१ ॥

धूर्ताङ्ग्लशासननियोजितभेदनीतिं
धर्मान्धमुस्लिमजना बबुधुर्न सम्यक् ।
सत्याग्रहं विरुरुधुः कलहायमाना
हिन्दूंश्च मुस्लिममते प्रसभं विनिन्युः ॥ ६२ ॥

कुटाङ्ग्लनीतिकपटं निपुणं निरीक्ष्य
लालोऽपि हिन्दुजनरक्षणबद्धलक्ष्यः ।
राष्ट्रीयपक्षपरिवादभयाविचाल्यो
धर्मच्युतानघजनान् सदयं ररक्ष ॥ ६३ ॥

व्हिक्टोरियाप्रतिकृतिं व्यरुणत्सधैर्यं
ख्रिस्तीयधर्मगुरुजालमपि न्यरुद्ध ।
आङ्ग्लाधिराज्यविपरीतमसौ बभाषे
इत्याङ्ग्लशासनरुषः स पदं बभूव ॥ ६४ ॥

विद्रोहिभाषणवशात्स पुनर्निरुद्धः
सार्धाब्दतीव्रतमदण्डमसाववापि ।
काराकठोरपरिपीडनजीर्णशीर्णं
शोषाभिभूतमभवद् वपुरस्य तीव्रम् ॥ ६५ ॥

तत्स्वास्थ्यभी[illegible]युक्तो
 ह्यारोग्यमाप्तुमगमत् भिषजोपदिष्टः ।
उत्तुङ्गसोलनसमं प्रथिताधिवासं
 तस्माच्च रोगरहितः पुनराजगाम ।। ६६ ।।

माण्टेग्युशासनविधाननिरीक्षणार्थं
 सर्वाधिकारसहितं प्रहितं तदानीम् ।
आङ्ग्लाभिरूपजनमण्डलमार्यदेशे
 व्युत्पन्नसायमननामनराधिपत्ये ।। ६७ ।।

सर्वत्ररोषकलुषीकृतलोकवारै-
 रुत्तोलितासितपताकिभुजैरसंख्यैः ।
उद्घुष्टमण्डलविरोधकघोषवाक्यै-
 रुत्स्फूर्तमार्गगमनैश्च बहिष्कृतं तत् ।। ६८ ।।

ख्रिस्तीयविंशशतके वसुनेत्रवर्षे
 लाहोरपत्तनमगादकतूबरान्ते ।
तत्स्वागताय जनताऽसितकेतुहस्ता
 सज्जा बभूव नरकेसरिलालमुख्या ।। ६९ ।।

यात्रासभापरिषदादिकबन्धनानि
 राजाज्ञया प्रचरितानि विलङ्घ्य शान्तम् ।
गच्छन् स लोकनिवहोऽसितकेतुहस्तो
 रक्षाधिकारपुरुषैः सहसाऽभियुक्तः ।। ७० ।।

आरक्षिराजपुरुषाक्रममुख्यलक्ष्यः
 सर्वातिशाय्यमितविक्रमधैर्यमेरुः ।
लोकैश्च शान्तिमचलां परिधारयन् स
 वात्याऽविकम्पितहिमाद्रिरिवावतस्थे ।। ७१ ।।

शीर्षं हि कस्य दलितं स्फुटितं च वक्षो
भग्ना भुजा शकलिता प्रसृताऽपरस्य ।
मर्मान्तघातसुनियोजितपूर्वसन्धं
लालोपरि प्रहृतमाङ्गलजनेन बुद्धया ॥ ७२ ॥

रुग्णालयं हि परितः परिवारयत्सु
चिन्तापरेषु कुपितेषु च नागरेषु ।
सम्प्रार्थितोऽपि शयनाद् भिषजा न यातु-
मत्यद्भुतां क्षतयुतोऽपि गिरं बभाषे ॥ ७३ ॥

ऊर्जस्वलं हृदयहारि च भाषणं तन्
मार्कण्टनेर्हि वचसा तुलनाय योग्यम् ।
संज्ञां च केवलमहो यदि सोऽकरिष्यत्
तर्ह्याङ्गलरक्तसरिता सहसाऽवहिष्यत् ॥ ७४ ॥

सन्तप्तक्रुद्धजनतां प्रतिकारसिद्धां
शान्तां विधाय निजगाद गिरां समर्थाम् ।
"एकैकसम्प्रहरणं निहितं स्वकाये
ह्याङ्गलाधिराज्यशवपेटककीलकः स्यात्" ॥ ७५ ॥

आरभ्य निष्ठुरतमात्कठिनाभिघाता-
दष्टादशे हि दिवसे प्रविभातकाले ।
लालो बभूव दयितो भुवनैकबन्धोः
सम्पात्य भारतभुवं खलु शोकसिन्धौ ॥ ७६ ॥

पञ्चाम्बुभाग्यरविरस्तमयं जगाम
म्लानानि सर्वजनमानसपङ्कजानि ।
त्रैलोक्यभानुरपि नूनमतीवखिन्नो
ह्यस्ताचलं प्रति चचाल शनैः शनैः सः ॥ ७७ ॥

स्वल्पावधावपि जनैरमितैरसङ्ख्यैः
सम्प्राप्य तत्र सजलाक्षसशोकचित्तैः ।
श्रद्धाञ्जलिः किल यदर्प्यत भावपूर्णा
तन्नाम लाजपतरायमहत्त्वमानम् ।। ७८ ।।

सत्यं हि गान्धिसमनेतृवरेण नूनं
शोकाभिभूतमनसा भणितं तदानीम् ।
"लालेन सदृशजना न म्रियन्ति तावद्
यावद्धि भारतनभोगतसूर्यचन्द्रौ" ।। ७९ ।।

साम्राज्यवादिहृदयान्तरकम्पकारी
कौटिल्यपूर्णपरशासनसुप्तिहारी ।
स्वातन्त्र्यमङ्गलविभातविसूचकोऽसौ
शान्तो बभूव नितरां नरसिंहनादः ।। ८० ।।

आसीन्न राजनयकोविद एव लालः
सर्वेऽपि शास्त्रनिचये समभून्नदीष्णः ।
"इङ्गलण्डजानपदभारतधारकत्वं"
तस्यार्थशास्त्रनिपुणत्वनिदर्शनं नु ।। ८१ ।।

दुष्टाभिसन्धिलिखितस्य कुपुस्तकस्य
मेयोप्रणीतमदरेण्डिमसंज्ञितस्य ।
निष्पेषवत्प्रतिवचः प्रददौ स लालः
"आपन्नभारतमिति' प्रथिते प्रबन्धे ।। ८२ ।।

इष्टेण्डियानिगमलुण्ठनमोषणेन
जातः कथं भरतदेशकलाविनाशः ।
सम्पन्नराष्ट्रमभवच्च कथं दरिद्रं
प्रादर्शि सूक्ष्मतमपुस्तकलेखनेन ।। ८३ ।।

देशाभिमानिनरवीरधुरन्धराणां
श्रीकृष्णमेजिनिशिवाजिनृपुङ्गवानाम् ।
ऊर्जस्वलानि चरितानि लिलेख धन्यो
यत्प्रेरिताश्च युवकाः शतशस्तदानीम् ॥ ८४ ॥

देहास्थिवर्णरुधिरैर्ननु भारतीया
वागात्मचिन्तनमतैस्तु भवेयुराङ्गलाः ।
इत्याङ्गलभूपपरिचालितराष्ट्रशिक्षां
निःशेषतः स परिवर्तयितुमियेष ॥ ८५ ॥

हीनत्वभाववशविस्मृतपूर्ववृत्तान्
पाश्चात्यभौतिकविकासविलुप्तदृष्टीन्
स्वातीतगौरवकथाकथनेन लालः
स्वत्वभिमानभरितान् युवकांश्चकार ॥ ८६ ॥

सर्वेषु विश्वविदितेषु समुन्नतेषु
स्थित्वा स्वयं स विषयेषु च तेषु तेषु ।
प्राबोधयत्स्वयुवकानधिकारपूर्वं
न्यूना वयं न सुतरां भुवने कथञ्चित् ॥ ८७ ॥

अस्पृश्यतां भरतराष्ट्रकलङ्कभूतां
दूरीचिकीर्षुरकरोत्प्रतिमेलकानि ।
अस्पृश्यसंज्ञितजनैः सहभोजनानि
लालः स्वयं व्यरचयत्स्वयमंशभागी ॥ ८८ ॥

तत्त्यागशौर्यबलिदानपराक्रमाणां-
मूर्जस्वलोत्कटसमुज्ज्वलभव्यगाथा ।
गुञ्जेत्सदैव जनमानसगह्वरान्तः
सत्प्रेरणाखनिरहो भविता च शश्वत् ॥ ८९ ॥

२८-१-१९६५

# नेहरूनिर्याणम्

यावज्जीवं भरतविषयं सेवामानो महात्मा
यावच्छ्वासं निरतिशयितं विश्वशान्त्यै प्रयस्यन् ।
आ स्वातन्त्र्यात्परमसचिवो भारतस्याद्वितीयः
कष्टं ! कष्टं ! दिवमुपगतः श्रीजवाहरलालः ॥ १ ॥

श्रीमत्पुत्रो विभवसहितः श्रेष्ठवंशेऽपि जातो
विद्याचञ्चुर्निपुणविधिवित्सर्वमान्योऽपि धीमान् ।
कृत्स्नाँल्लोभान् मनुजसुलभान् सन्त्यजन् राष्ट्रहेतो-
र्हा धिक् हा धिक् ! दिवमुपगतः श्री जवाहरलालः ॥ २ ॥

आत्मधीनं भरतविषयं येन वीरेण कर्तुं
कारावासः कठिनकठिनो नैकवारं विसोढः ।
सर्वस्वानां बलिरुपहृतः स्थण्डिले मातृभूम्याः
सोऽयं हा धिग् ! दिवमुपगतः श्री जवाहरलालः ॥ ३ ॥

दारिद्र्यार्त्या कवलितजनान् वासहीनाननाथान्
बोधाभावव्यथितमखिलं युद्धमग्नं च विश्वम् ।
यत्नैर्दीर्घैरविरतकृतैर्मोक्षयिष्यन् महात्मा
कष्टं ! कष्टं ! दिवमुपगतः श्रीजवाहरलालः ॥ ४ ॥

रावीतीरे मिलितपरिषत्क्रान्तिकारिप्रधानो
मुक्तिं पूर्णां भरतधरणेर्घोषयन्नात्मलक्ष्यं ।
कालाद्दीर्घाद्दलितजनतामुद्धरन् दास्यपङ्कात्
कष्टं ! कष्टं ! दिवमुपगतः श्री जवाहरलालः ॥ ५ ॥

बाण्डुङ्गाख्ये विदितनगरे सङ्गतायां सभायां


भूपालानां युगपरिणतिं लोकपीडाकराणाम् ।
कल्पादिं च व्यथितजगतो घोषयन्मुक्तकण्ठं
हा धिग् ! हा धिग् ! दिवमुपगतः श्री जवाहारलालः ॥६॥

इण्डोनेश्याविवशजनतां बन्धमुक्तां विधातुं
येनाहूता प्रथितपरिषद्देहलीराजधान्याम् ।
यत्सन्त्रस्ता हतडचजना आत्मभूमिं प्रयाताः
सोऽयं हा धिग् ! दिवमुपगतः श्रीजवाहारलालः ॥ ७ ॥

श्रीमद्गान्धेः प्रियतमभटः शिष्यभावोपपन्नो
यस्मादासीत्परमसुभगो विश्ववन्द्यस्य मुख्यः ।
सत्याहिंसाप्रशमकरुणाः साधनानां शुचित्वं
तत्सत्तत्त्वं विमलधवलं नित्यमेवाचचार ॥ ८ ॥

अण्वस्त्राणां प्रतिभयरणज्वालमालाज्वलिष्यद्
भूयो भूयो भुवनहतकं त्रायमाणः प्रणाशात् ।
दोलारूढं जगदुपशमं स्थापयन् गाढपीठे
कष्टं ! कष्टं ! दिवमुपगतः श्रीजवाहारलालः ॥ ९ ॥

रूसाम्रीकाजनपदवराभ्यन्तरे वर्धमानं
वैरं घोरं प्रलयपिशुनं युक्तियुक्तं निरस्य ।
विश्वं रक्षन् कुशलतमया राजनीत्या स धीमान्
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ॥ १० ॥

आर्यावर्तं त्रिभुवनगुरुं रूढिपङ्के निमग्नं
भाषाजात्यादिकसमलघुक्षुद्रवादेऽवगाढम् ।
उद्धृत्यायं प्रथमसरणौ स्थापयिष्यन् महात्मा
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ॥ ११ ॥

भाक्रादामोदरसममहाह्लादिनीसेतुबन्ध-
विद्युच्छक्तिप्रजननपरैर्योजनानां शतैश्च ।
कायाकल्पं भरतविषयस्यात्मनः संविधाता
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ।। १२ ।।

दक्षः शिल्पी प्रगतबलवद्भारतस्याभिगीतः
सन्निर्माता भुवनविदितग्रन्थराजत्रयाणाम् ।
निःसङ्गाया निपुणनयविद्राष्ट्रनीतेर्विधाता
हा धिग् ! हा धिग् ! दिवमुपगतः श्रीजवाहारलालः ।।१३।।

आफ्रेश्यान्तर्गतजनपदैः सादरं सेव्यमाना
विश्वक्षेमावहनचतुरा सङ्गमुक्ता तटस्था ।
नीतिर्देशान्तरविषयिणी कल्पिता येन भव्या
सोऽयं हा धिग् ! दिवमुपगतः श्रीजवाहारलालः ।। १४ ।।

जात्योदारः परमसहनो लोकतन्त्रानुरागी
श्रद्धावांश्चाभवदतितरां राष्ट्रसङ्घे शमाय ।
सत्यङ्कारो ननु स जगतो मुक्तिशान्त्यादिकानां
सोऽयं हा धिग् दिवमुपगतः श्रीजवाहारलालः ।। १५ ।।

नन्दादीपो विधुरजगतो विश्वशान्त्यग्रदूतः
कारुण्यानां विपुलजलधिर्मानदण्डो नराणाम् ।
मानुष्यस्य प्रतिकृतिरयं शीलसौजन्यमूर्तिः
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ।। १६ ।।

दीपस्तम्भो जगति महतो लोकराज्यस्य भास्वा-
नाशातन्तुर्दलितजगतः पञ्चशीलप्रणेता ।
पोताध्यक्षः कुशलतमधीर्लोकतन्त्राब्धियाने
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ।। १७ ।।

हा ! हा ! मग्ना विधुरजगती शोकसिन्धावगाधे
नूनं व्याप्तं त्रिभुवननभोमण्डलं कृष्णमेघैः ।
छन्नाऽभूद् भूर्निबिडतमसा विश्वशान्तिर्विनाथा
तस्मिन् याते भुवनदयिते श्रीजवाहारभानौ ॥ १८ ॥

स्वाधीनत्वं खलु गतधवं प्राणहीनानुकम्पा
निष्कापट्यं सखिविरहितं पञ्चशीलं विमित्रम् ।
मानुष्यं सत्प्रणयिरहितं बन्धुभावो दरिद्रः
स्वर्गं याते भुवनदयिते श्रीजवाहारबन्धौ ॥ १९ ॥

राजर्षीणां जनकसदृशां वीतरागावतारो
येसूगान्धीसुगतमहतां स्नेहकारुण्यसारः ।
साक्षाद्रामो भुवनतिलको लोकहर्षाभिरामः
स्वर्गं प्रायादहह ! सहसा श्रीजवाहारलालः ॥ २० ॥

यावद्भानुर्विपुलगगने भाति सेन्दुस्सतारो
यावद् भूमौ गिरिवरसरित्सागराश्चैव सन्ति ।
यावद्राष्ट्रं भवति भुवने भारतीयं विशालं
तावत्स्थास्यत्यजरममरं श्रीजवाहारनाम ॥ २१ ॥

१५-७-६४



---

९. कोरिया, लाओस, कांगो, यू टू अफेअर इत्येतान् प्रश्नानधिकृत्य युद्धोन्मुखं विश्वं तेन नैकवारं विनाशाद् रक्षितम् ।

१४. आफ्रैश्या = आफ्रिका + एशिया ।

# स्वातन्त्र्यवीरोत्क्रमणम्

आङ्ग्लाधिराज्यखलशासनदास्यपङ्के
मग्नात्मभारतभुवं हि समुद्दिधीर्षुः ।
आजीवनं निजतनुं क्षपयन्निरोधे
स्वातन्त्र्यवीरपरमो गतवान् दिवं हा ! ॥ १ ॥

यत्त्यागशौर्यबलिदानसमर्पणानां
श्रुत्वाद्भुतां परमहर्षणदिव्यगाथाम् ।
स्फूर्तिर्ह्यसंख्यनरवीरगणैरवाप्ता
तं क्रांतिवीरतिलकं शतशो नमामि ॥ २ ॥

चाफेकरद्वितयशासनदिष्टघातं
श्रुत्वाङ्ग्लदास्यनिगडान्निजदेशमुक्तेः ।
दुर्गासमक्षविधिवद्विहितप्रतिज्ञं
स्वातन्त्र्यवीरपरमं शतशो नमामि ॥ ३ ॥

दुष्टाङ्ग्लशासनविनाशधिया सशस्त्रं
पूर्वैः कृतं विफलभारतमुक्तियुद्धम् ।
सञ्चालयन् तरुणभारतसंस्थयाऽसौ
स्वातन्त्र्यवीरपरमो गतवान् दिवं हा ! ॥ ४ ॥

वैदेशिकानि वसनानि विदाह्य तेन ।
प्रक्षोभकानि हि विधाय सुभाषितानि ।
ऊर्जस्वलानि च विलिख्य सुगीतकानि
विद्यार्थिनाऽपि विहितं महनीयकार्यम् ॥ ५ ॥

तत्प्रेरितान्मदनलालकरास्त्रयातात्
सेनाधिपस्य किल 'वायलि' नामकस्य ।
भूकम्पकम्पितसमा चलिताङ्गलभूमि-
र्यस्माच्च लण्डनपुरे स बभूव बद्धः ॥ ६ ॥

आनीयमान इह भारतवर्षदेश-
मारक्षिदृष्टिमपहृत्य ललङ्घ सिन्धुम् ।
गोलाभिवर्षपरितोऽपि जगाम पारं
फ्रेञ्चातिसन्धिवशतस्तु पुनर्गृहीतः ॥ ७ ॥

सर्वापहारसहितं युगजन्मदण्डं
निर्णीय निष्ठुरतमैः प्रहितोऽण्डमानम् ।
निष्पेषयन्त्रजलयन्त्रघरट्टकर्ष-
प्रायातिघोरतमकष्टमसावदापि ॥ ८ ॥

मृत्युञ्जयेन किल वीरवरेण तेन
गौराङ्गराज्यरविरस्तमयानलक्षि ।
स्वप्नांशपूर्तिरपि तस्य बभूव तस्मा-
देको ह्यखण्डविषयः समभूद् द्विखण्डः ॥ ९ ॥

अस्या हि भारतभुवः परदास्यमुक्त्यै
यावन्ति क्लेशकरदारुणपीडनानि ।
सोढानि तेन नरवीरधुरन्धरेण
केनापि नेतरजनेन विमर्षितानि ॥ १० ॥

शल्यं दुनोति मम मानसमेतदेव
त्यागो हिमाद्रिसदृशो विपुलोऽद्वितीयः ।
सम्मानितो नहि स भारतशासनेन
सामान्यनर्तकनटानपि मानयित्रा ॥ ११ ॥

कामं भवन्तु शतशोऽपि विचारभेदाः
सामाजिका अपि च राजनयानुबद्धाः ।
कस्यापि देयविषये तु कदर्यदृष्टिः
तत्रापि राजनयजा हि नितान्तगर्ह्या ।। १२ ।।

राष्ट्रीयसामरिकशक्तिविवर्धनस्य
तद्दूरदृष्टिकृतबोधनमाचरिष्यत् ।
चेन्नैव नूनमभविष्यदयं विपाकः
यच्चीनपाकसमराष्ट्रगणाभियुक्ताः ।। १३ ।।

आङ्ग्लानुमोदितविभक्तमतप्रणाली-
माराधनं च सततं लघुसंख्यकानाम् ।
नूनं हि सावरकरो व्यरुणद् यथार्थं
देशस्य खण्डनमभूद् द्वितयाद्धि तस्मात् ।। १४ ।।

अत्यन्तवीररसनिर्भरभाषणानि
तत्क्रान्तिकारिकवनानि च पुस्तकानि ।
आङ्ग्लाधिराज्यगृहमूलविचालनानि
सन्तीति शासकगणैः प्रतिबन्धितानि ।। १५ ।।

अष्टावृतत्रितयमात्रवयःप्रणीतात्
तस्याद्भुतात् 'प्रथमभारतमुक्तियुद्धा'त् ।
आजादहिन्दगतवीरभटैस्तथान्यैः
सत्प्रेरणा ह्यधिगता निजदेशमुक्तेः ।। १६ ।।

सेनापरागकलहो न तु लोकयुद्ध-
मित्याङ्ग्लधूर्तपुरुषैरपदिश्यमानम् ।
सत्यं ह्यभूत् प्रथमभारतमुक्तियुद्ध-
मित्युत्कटैरलमसाध्युपपत्तिजालैः ।। १७ ।।

आचार्यभीष्म इव सङ्गरशौर्यकथः
रोमाञ्चकारिनिजसैनिकशौर्यगाथाम् ।
श्रोतुं रुरोध मरणं ननु युद्धकाले
सम्प्राप्य पुण्यमयनं च जहौ निजासून् ।। १८ ।।

राष्ट्रीयताज्वलनसन्निभदीप्तमूर्तिः
प्रत्यक्षदेशगरिमा प्रतिमा हि धाम्नः ।
देशानुरागबलिदाननवावतारः
क्रान्तेरजस्त्रविमलः प्रभवः प्रशान्तः ।। १९ ।।

कांग्रेसपक्षमुखरैरपि पञ्चशीलै-
र्हिंसातिरिक्तहृदयैरपि मुक्तशस्त्रैः ।
यस्माच्च सैन्यबलवर्धनमिष्यतेऽद्य
तस्माद्धि सावरकरस्य जितं विचारैः ।। २० ।।

वागीश्वरोऽपि विदितश्च बहुश्रुतोऽपि
साहित्यिकोऽपि च समाजसुधारकोऽपि ।
स्वातन्त्र्ययज्ञहुतजीवितवैभवोऽपि
सत्यं बभूव स हि भारतहीरकोऽपि ।। २१ ।।

६ - ३ - ६६



३. द्वावपि चाफेकरबन्धू शासनेन मृत्युदण्डेन घातितौ ।

१६. इङ्ग्लैण्डदेशेऽध्ययनं कुर्वता सावरकरेण केवलं चतुर्विंशतितमे वयस्येव "१८५७ स्वातन्त्र्ययुद्ध" मिति बृहत्कायो महान् प्रबन्धो लिखितः । तत्र तेन सिद्धीकृतं यत् १८५७ तमाब्दस्य युद्धं न केवलं सैनिकविप्लव आसीदपितु ब्रिटिशशासनविरुद्धं भारतीयानां स्वातन्त्र्यसंग्राम आसीदिति ।

# शास्त्रिशोकलहरी

जवाहारे याते भरतविषयान्नूनमचिरात्
प्रजातन्त्रं लुप्येत् प्रवरनरनेतृत्वरहितम् ।
इतीमामाशङ्कां कुशलतमनीत्या विफलयन्
प्रयातो हा ! शास्त्री परमसचिवो भारतभुवः ।। १ ।।

युधं जित्वा शक्त्या भरतविषयस्यात्मविषयां
घनीभूतां ग्लानिं विषमनृपनीतिप्रजनिताम् ।
अपाकृत्योच्चैस्तं पुनरपि नयन् गौरवपदं
प्रयातो हा ! शास्त्री परममहितो विक्रमसमः ।। २ ।।

यथा जेताऽऽसीत्स प्रखरतमयुद्धस्य निपुण-
स्तथा ताश्कन्देऽभूत् प्रशमविजयी विश्वविदितः ।
पराकाष्ठां गत्वा परमरमणीयस्य यशसः
प्रयातो हा ! शास्त्री कठिनमृदुलाशोकहृदयः ।। ३ ।।

विलोके खर्वः सन् सकलवसुधापूरितयशाः
प्रकृत्या शान्तोऽपि प्रकटितमहाचण्डचरितः ।
विनम्रो नम्राणां कुटिलचरितानां प्रतिभयो
महामन्त्री शास्त्री सपदि गतवान् वामन इव ।। ४ ।।

प्रजातः सामान्ये परमधनहीनेऽप्यभिजने
वियुक्तः सार्धाब्दे वयसि जनयित्राऽपि सुभगः ।
स्वसङ्कल्पोद्योगाद् रुचिररमणीयाद् गुणगणाद्
महामन्त्री भूत्वा झटिति गतवान् दिव्यपदवीम् ।। ५ ।।

अधीतः श्रीकाश्यां विमलविषयां गुणगणा-
न्निबद्धः कारायां तदनु बहुशो देशरतये ।
प्रविष्टो 'लालाजी' जनितजनतासेवकदले
ततः श्रीगान्धीनामभवदनुगो धीरधिषणः ॥ ६ ॥

अपूर्वं कौशल्यं प्रकटयति पक्षस्य घटने
प्रकृष्टं प्राविण्यं प्रथमवरणे प्रार्थिचयने ।
उदीच्ये प्रान्तेऽयं सफलगृहसाचिव्यमकरोत्
प्रियोऽभूत्सर्वेषां निरतिशयविश्रम्भजननः ॥ ७ ॥

समाहूतः केन्द्रं विविधपदभारानुदवहन्
महामात्ये याते तदनु सहसा स्वर्गपदवीम् ।
नियुक्तस्तत्स्थाने परमसचिवो भारतभुवो
विना वैमत्यं यद् ध्वनयतितरां तस्य शुचिताम् ॥ ८ ॥

स्वकीये सार्धाब्दे लघुतममहामन्त्रिसमये
समस्याभिः पूर्णे जटिलजटिलाभिः सुकठिने ।
समारूढो धन्यः कुशलतमनेतृत्ववशतः
परां कोटिं कीर्त्या विधिरपि यदीर्षालुरभवत् ॥ ९ ॥

प्रवीणः सन्धाता विघटितजनानां घटयिता
जनानात्मीकुर्वन् मधुमयपदावर्जितगिरा ।
विरोधोद्युक्तानामपि शमयिता शान्तवचसा
प्रयातो हा ! शास्त्री भरतजननीशीर्षकमणिः ॥ १० ॥

तिरोधानं याते हजरतमुहम्मादचिकुरे
प्रदीप्तं काश्मीरे कलहदहनं भीषणतमम् ।
शमं नेता सद्यः कुशलनयशीताम्बुविकिरैः
प्रयातो हा ! शास्त्री भरतविषयानन्दजलदः ॥ ११ ॥

असामे मद्रासे प्रबलचलिते वाग्विषयके
वहन् झंझावाते सुकुशलतया राष्ट्रतरणीं ।
तथा सूबा - नागा - दिकबहुविवादानपि हरन्
प्रयातो हा ! शास्त्री भरततरणीनाविकवरः ॥ १२ ॥

क्षयिष्णून् सम्बन्धान् भरतविषयस्यान्यविषयैः
विशिष्टं नेपालादिकसमसमीपस्थविषयैः ।
समुत्कर्षं नेता सफलतमसन्धानपणनैः
महामन्त्री शास्त्री सपदि गतवान् नीतिनिपुणः ॥ १३ ॥

यदाङ्ग्लामेरिकादिकजनपदैः हस्तगमितैः
महाभीमैष्टेङ्कैर्विकटविकटैः सेबरजटैः ।
समाक्रान्तं पाकैः कपटपटुभिश् छम्बविषये
तदा सौम्यः शास्त्री ननु समभवद्वज्रकठिनः ॥ १४ ॥

प्रजानंश्चीनानामपि स कुटिलां पाकसहतां
समग्रेऽपि प्रायो जगति विपरीते स्थितवति ।
प्रयातां मित्राणामपि दुरभिसन्धिं च रिपुणा
दृढं तस्थौ शास्त्री समरविमुखो नैव समभूत् ॥ १५ ॥

अमेरीकादत्ता यममहिषकल्पाः सुविदिताः
सलीलं प्रध्वस्ता मृद इव चयाः पेटनरथाः ।
महाघोराः श्येना इव विनिहताः सेबरजटाः
पराभूताः पाकाः स्तिमितचकितं विश्वमखिलम् ॥ १६ ॥

परं शान्तेर्दूतः स हि न मनसा युद्धदयितो
विवादानां सिद्धिः प्रहरणबलान्नैव भवति ।
इति प्रज्ञः पाकप्रमुखपुरुषायूबसहितं
प्रयातस्ताष्कन्दं स्थिरतमशमान्वेषणपरः ॥ १७ ॥

ससंघर्षं पाकाधिपतिसहितं सप्त दिवसं
विधायार्यैश्चर्चां परमसफलं सन्धिमकरोत् ।
गतो निद्रां तावत् पटुहृदयपीडामलभत
सपद्येवाभूद् हा ! भुवनदयितो देवदयितः ॥ १८ ॥

ध्वजा नम्रा जाता निखिलवसुधा शोकभरिता
समायाता दिल्लीं भुवनमुखरा दुःखविधुराः ।
लघुं केचित्प्रोचुर्विपुलजगतीं तेन रहितां
गतः शान्तेर्दूतो भुवनदयितश्चेतरजनाः ॥ १९ ॥

जनाः शोकाक्रान्ताः स्वजन इव तेषामुपरतः
महापूरोत्पीडा इव समवहन् शोकसरितः ।
निराशङ्कं शास्त्री व्यथितदलितानां प्रियजनः
क्वचित्तादृग् नेता भवति भुवने सार्धशरदि ॥ २० ॥

त्यजन् मन्त्रिस्थानं व्यतिकरजुषे बाष्पशकटे
समाविष्टो नेत्रा पुनरपि जहौ मन्त्रिपदवीम् ।
सदासेवामग्नः विगतपदलिप्सो नरमणि–
र्दयासिन्धुर्यातः श्रमिककृषकाणां प्रियसुहृद् ॥ २१ ॥

कियन्तो नो जाता जगति सचिवामात्यपरमाः
कियद्भिर्नाकारि प्रचुरधनवेश्मादिकचयः ।
परं श्रीशास्त्रीणामभवदतुलादर्शमहिमा
गृहं दूरे तावद् हयुटजमपि तेषां न भवति ॥ २२ ॥

विचाराचाराभ्यां निरतिशयपूतो नरवरः
स्तुतिर्वा निन्दा वा विचलयति यं नात्मसरणेः ।
अनासक्तः कर्मी सततजनसेवैकनियमः
स्थितप्रज्ञो नेता न खलु सुलभस्तेन सदृशः ॥ २३ ॥

दयादाक्षिण्यादिप्रचुरगुणरत्नैकजलधिः
सहिष्णुत्वाक्रोधप्रशमविनयानां प्रतिकृतिः ।
महाझञ्झावाताविचलचरणापूर्वलघुना
दिवं प्रायात् सद्यो धवलयशसा मण्डितजगत् ।। २४ ।।

यथार्थो संस्कृत्याः प्रतिनिधिवरो भारतभुवः
स्वयं दारिद्र्यार्तः परमसदयोऽकिञ्चनजने ।
अलङ्कुर्वन्नार्यो महदपि पदं दर्परहितः
प्रसूनश्लक्ष्णः सन् कुलिशकठिनोऽपूर्वमनुजः ।। २५ ।।

विलीनं नैराश्यं झटिति विगतं दैन्यतिमिरं
तिरोभूता ग्लानिः सपदि गलिता क्षीणबलता ।
पराभूता भावा विघटनपरा यस्य नयतो
ह्यदम्यं चाधृष्यं पुनरपि महद्राष्ट्रमुदितम् ।। २६ ।।

रणं जित्वा घोरं तदनु जितवान् शांतिमपि यः
प्रियान् पञ्चप्राणानपि स विजहौ शान्तिभृतये ।
द्वयोर्जेता सम्यग् जगति नितरां दुर्लभतमः
परं धन्यः शास्त्री भवति तदपि स्वल्पसमये ।। २७ ।।

११-२-१९६६



६. लालाजी=लाला लजपतरायः ।

११. श्रीनगरे जाता 'हजरतबाल'स्य विश्रुता घटना ।

२१. आन्ध्रप्रदेशे अरियालुरस्थाने सञ्जातरेलदुर्घटनानन्तरं तेन रेलमन्त्रिपदात्यागपत्रं प्रदत्तम् । तथैव कामराजयोजनान्तर्गतं सर्वप्रथमं तेनैव स्वेच्छाया स्वमन्त्रिपदं त्यक्तम् ।

# इन्दिराहौतात्म्यम्

शोकाम्बुधौ भारतभूर्निमग्ना धराऽन्धकारे निबिडे निलीना ।
कृष्णाभ्रसंछादितमन्तरिक्षमस्तं ह्यगाज्ज्योतिरतीवदीप्तम् । १ ।

दिगन्तविश्रान्तविशालकीर्तिरनन्यसाधारणधैर्यमूर्तिः ।
प्रधानमन्त्र्युच्चपदाधिरूढा हन्तेन्दिरा हा सहसा प्रयाता । २ ।

भिन्द्रानवालोग्रतराध्वनीनैः पृथक् खलिस्तानमभीप्सुसिक्खैः ।
ब्लूस्टारसङ्केतितसैन्यकार्यद्विष्टैर्हता हा ! गुलिकाप्रहारैः । ३ ।

धर्मान्धताशाठ्यनृशंसतानां क्रौर्यस्य चायं परमावधिर्यत् ।
प्रधानमन्त्र्यङ्गसुरक्षकाभ्यां स्वावासभूमौ निहतेन्दिरार्या । ४ ।

विश्वासघातस्य परा हि काष्ठा यन्नाम रक्षाधिकृताधमाभ्याम् ।
स्वकीयगेहे निहतेन्दिरार्या वृत्यैव सस्यं खलु भक्षितं हा ! । ५ ।

राष्ट्रैक्यसामर्थ्यसमृद्धिहेतोरहर्निशं कार्यरताऽविरामम् ।
आसेतुशैलं सततं भ्रमन्ती चैतन्यमूर्तिः सहसा जगाम । ६ ।

अपूर्वधैर्याद्भुतशौर्यमूर्तिरदम्यदुर्दान्तपराक्रमोर्मिः ।
निःशङ्कनिर्भीकमनस्विनी हा हन्तेन्दिरा सा सहसा विलुप्ता । ७ ।

अमोघवीर्यं महनीयराष्ट्रमूर्जस्वलं भारतवर्षदेशम् ।
विधातुकामा परिपन्थ्यभेद्यं वर्चस्विनी हा सहसा जगाम । ८ ।

अमेरिकादत्तभयङ्करास्त्रैः सन्नद्धगर्वोद्धतमत्तपाकम् ।
जित्वा रणे वङ्गभुवो विमोक्त्री दुर्गेन्दिरा हा सहसा जगाम । ९ ।

निर्व्यूहराष्ट्रौघविदग्धनेत्री गोप्त्री सुराणामसुरैकहन्त्री ।
भेत्री रिपूणामवदानकर्त्री मन्त्रिप्रधाना सहसा जगाम । १० ।

दारिद्र्यसम्पीडितपश्चवर्ग्यान् कृषीवलान् कर्मकरांस्तथैव ।
स्वानेकसंयोजनकार्यजातैरुद्धारयन्ती सहसा जगाम । ११ ।

अस्मत्प्रियं भारतवर्षदेशं समस्तभूमण्डलराष्ट्रमध्ये ।
उत्तुङ्गमानार्हपदं नयन्ती तेजस्विनी हा ! सहसा जगाम । १२ ।

अत्यद्भुते वङ्गविमुक्तियुद्धे दृष्ट्वा यदीयाद्भुतशौर्यधैर्यम् ।
समस्तविश्वं चकितं बभूव दुर्गेन्दिरा सा सहसा जगाम । १३ ।

अधृष्यमोजस्विबलाढ्यराष्ट्रं धन्यं चिकीर्षुः खलु भारतीयम् ।
अण्वस्त्रविस्फोटमपीह कृत्वा विस्मापयन्ती सहसा जगाम । १४ ।

राष्ट्रैक्यसन्धारणरक्षणार्थं पञ्चापि नैजासुवरांस्त्यजन्ती ।
हौतात्म्यपूता स्मरणीयगाथा विद्युल्लता हा सहसा जगाम । १५ ।

स्फुरत्प्रभा मूर्तिमती नु शोभा सञ्चारिणी दीपशिखा नु भव्या ।
भूमौ चरिष्णुश्चपला नु दिव्या तेजस्विनी हा सहसा विलुप्ता ।

स्रोतस्विनी नूनमजस्रशक्तेरखण्डचैतन्यमहार्चिरेव ।
अदम्यधैर्याध्यवसायमूर्तिः सङ्कल्पशक्तिः सहसा जगाम । १७ ।

उत्साहमन्त्रप्रभुशक्तिपूर्णा चाणक्यनीत्यां कुशला नयज्ञा ।
समर्पिता भारतगौरवाय वर्चस्विनी हा सहसा विलुप्ता । १८ ।

राष्ट्रस्य बाह्यान्तरशत्रुकूटं स्वापूर्वसूक्ष्मेक्षिकयाऽऽकलय्य ।
निर्भिद्य चापूर्वविदग्धनीत्या राष्ट्रं ह्यवन्ती सहसा जगाम । १९ ।

रक्षाविधौ पूर्णतया स्वतन्त्रं राष्ट्रं स्वयंपूर्णमजस्रशक्तिम् ।
कर्तुं तया दूरदृशा महान्ति शस्त्रास्त्रनिर्माणगृहान्यकारि । २० ।

हिमाद्रितुङ्गं धवलं विशालं तेजस्विमध्योज्ज्वलचारुशीलम् ।
राष्ट्रार्पितं पूतमुदात्तसत्त्वं धर्मान्धतादावशिखावलीढम् । २१ ।

तस्याः प्रमादा अभवन्ननेके प्रमादशून्यो भुवि को बभूव ।
दोषास्तु तस्या गुणवृन्दलीनाः सुधांशुपादेषु यथा मृगाङ्कः । २२ ।

विरोधदोषाद्रिदरीगुहासु निर्बाधनिर्विघ्नतया प्रधावन् ।
तदीयचैतन्यसरित्प्रवाहो गङ्गेव नूनं प्रतिभाति भव्यः । २३ ।

तेजस्विनी भारतकन्यकाऽसौ आशागभस्तिर्भुवि पीडितानाम् ।
त्रैलोक्यशान्त्यर्थकृताभियोगा चिरं भवेत्संस्मरणीयकीर्तिः । २४ ।

राष्ट्रैक्यसाग्र्यसुरक्षितार्थं समाचरन्त्यात्मसमर्पणं सा ।
हौतात्म्यपूता खलु गान्धिवर्या चिरं भवेत्संस्मरणीयकीर्तिः । २५ ।

अण्वस्त्रसन्नद्धबलाढ्यदेशांस्त्रैलोक्यविध्वंसकघोरयुद्धात् ।
निवारयन्ती निजयत्नजातैर्मेधाविनी सा सहसा जगाम । २६ ।

पृथक् खलिस्तानमभीप्सुसिक्खैः पंजाबराज्ये विगतत्रिवर्षम् ।
प्रवर्तितं यद्धि विघातसत्रं तदीयमेतच्चरमावसानम् । २७ ।

दधीचिगान्धीशिबिबुद्धभूमौ नृशंसनिर्मानुषनिष्ठुरत्वम् ।
लज्जास्पदं भारतसभ्यतायाः सुसंस्कृतेश्चापि कलङ्कभूतम् । २८ ।

प्राणान्तकोऽयं गुलिकाप्रहारो न केवले गान्धिकलेवरेऽभूत् ।
बभूव नूनं जनतन्त्रमूले महत्तमस्य प्रियभारतस्य । २९ ।

यतः खलिस्तानमभीप्सुसिक्खैः पन्थं च राष्ट्राद् बहुमन्यमानैः ।
जात्यन्धमूढैर्निजपन्थहेतोर्निर्मानुषं सा निहतेन्दिरार्या । ३० ।

प्रश्नस्ततोऽयं समुदेति नूनं निष्ठाद्वयोर्मानवजीवनस्य ।
गरीयसी स्यात् कतरा स्वदेशे स्वराष्ट्रनिष्ठा ह्युत धर्मनिष्ठा । ३१ ।

अकालतख्तं ह्युत संविधानं किं सार्वभौमं भवतीह देशे ।
निर्धार्यमेतत्खलु राष्ट्रधुर्यैः खड्गौ हि कोषे न समं वसेताम् ।३२।

प्रजाप्रभुत्वे भुवने प्रतिष्ठे कस्यानुशास्तिः प्रबला वरिष्ठा ।
धर्मस्य यद्वा विधिशासनस्य निर्णयमेतत्सकलैः समेत्य ।३३।

कस्याधिपत्यं भवतीह देशे ह्यकालतख्तस्य नु संसदो नु ।
नूनं विधेयोऽस्य विनिश्चियोऽपि ह्यारोढुमश्वौ युगपन्न शक्यम् ।३४।

समस्तलोकैरवधेयमेतद् धर्माच्च पक्षादपि सम्प्रदायात् ।
राष्ट्रैक्यकल्याणमखण्डता च सर्वातिरिक्ता विषया भवन्ति ।३५।

अनन्तदुःखोद्भवमूलहेतुः सकृत् कृतो भारतखण्डनस्य ।
महापरोधो हि पुनः कदाचित्केनापिकर्तुं नहि चिन्तनीयः ।३६।

यावद्विभान्ति गगने रविचन्द्रतारा
यावद्भवन्ति भुवि भूधरसिन्धुधाराः ।
यावच्च भारतभुवो भुवने प्रतिष्ठा
तावद्धि नूनमरा भवितेन्दिरार्या ।३७।



# इन्दिरापुण्यस्मरणम्

कन्यारत्नं प्रथितयशसः श्रीजवाहारनेहरोः
प्राक् सप्तत्या अजनि कमलायां समाभ्यः प्रयागे ।
पुण्यक्षेत्रे भुवनविदिते पुण्यशीलेन्दिरा सा
मुख्यामात्या प्रथममहिला भारतस्याद्वितीया ॥ १ ॥

तस्याः शिक्षा प्रथममभवन्मुम्बयीपुण्यपुर्यो–
ष्टागोराणां तदनु समभूच्छान्तिधाम्नि प्रसिद्धे ।
आक्स्फोर्डे सा कमपि समयं शिक्षिता गान्धिवर्या
तत्रैवास्या परिचितिरभूद् गान्धिना फेरुजेन ॥ २ ॥

काले तस्याः परिणतिरभूत्तेन सार्धं विवाहे
राजीवः सञ्जय इति सुताविन्दिराऽजीजनच्च ।
आद्यः सद्यो भवति विदितो नायको भारतस्य
ह्यन्यः कालाकवलिततनुः कालपूर्वं बभूव ॥ ३ ॥

लोकेऽटन्ती भरतविषयामात्यवर्येण पित्रा
नानालोकान् विविधविदुषो नेतृवर्यान् मिलन्ती ।
तत्तद्देशप्रथितघटनारीतिनीत्यावलोकं
कुर्वाणा सा परमनिपुणा राजनीत्यां बभूव ॥ ४ ॥

बाल्ये सेनां विरचितवती वानराख्यां शिशूनां
काराबद्धा कमपि समयं मुक्तिसङ्ग्रामकाले ।
कांग्रेसाख्यप्रवरपरिषन्नेतृवर्या च भूत्वा
शास्त्रीजीनां सचिवसमये मन्त्रिचक्रे प्रविष्टा ॥ ५ ॥

ताष्कन्दे शङ्कितपरिसरे स्वर्गते शास्त्रिवर्ये
शून्यस्थाने प्रमुखमुखरैरिन्दिरा सा नियुक्ता ।
नव्यप्रत्नप्रमुखदलयोर्घोरसंघर्षमध्ये
मुख्यामात्या जगति महतो लोकतन्त्रस्य जाता ॥ ६ ॥

तस्याः काले श्रमिककृषिकोत्कर्षकायोजनानां
सङ्कल्पानां जनहितकराणां च नानाविधानाम् ।
दारिद्र्योच्चाटनपरमहाऽऽयोजनानां सधैर्यं
देशे कार्यान्वयनमभवन्निर्भयं सत्वरं च ॥ ७ ॥

रुद्धा वृत्तिः सपदि नृपवृन्दाय सन्दीयमाना
राष्ट्रायत्तास्तदनु विहिता वित्तकोषाः समस्ताः ।
वित्तागारैः श्रमिककृषिकेभ्योऽर्थपूर्तिर्व्यधायि
विंशत्यंशा दलितहितकृद्योजनाश्चालिताश्च ॥ ८ ॥

एतत्सर्वैः प्रखरविमतिं ज्ञापयन्तो वरिष्ठा
नेतारो निष्करुणमखिला भर्त्सिता धर्षिताश्च ।
पक्षान्निष्कासितपरिहृता गोरसान्मक्षिकेव
स्वाभीष्टार्थं शतकजरती राष्ट्रसंस्था विभक्ता ॥ ९ ॥

लोकप्रीतिप्रबलविपुलोत्तुङ्गशृङ्गाधिरूढा
विख्याताऽभूच्छ्रमिकदलितोद्धारकत्वेन लोके ।
तस्या नूनं श्रमिकदलितोत्थानशीलैकनीत्या
प्रत्याख्याताः स्थविरमुखराः संबभूवुः परास्ताः ॥ १० ॥

प्रख्याप्य स्वं दलितजनसंरक्षकत्वेन लोके
सामन्तानां भृतिमपि पुनर्दीयमानां निरुध्य ।
आपद्ग्रस्तश्रमिककृषिकेभ्योऽर्थपूर्तिं विधाय
तैस्तैः कार्यैर्जनहितकरैर्लोकमावर्जयत्सा ॥ ११ ॥

दैन्यं दूरीकुरुत विषयादित्थमुद्घोष्य घोषं

भूभृद्वृत्तैः सपदि विरतिं वित्तकोषादिकानाम् ।
राष्ट्रायत्तीकरणसदृशान्नाटकीयानुपायान्
कृत्वा निर्वाचनमपि च सा सर्वदेशे जिगाय ॥ १२ ॥

तत्सौभाग्यादिव समुदितः पर्वकालोऽद्वितीयो
वङ्गैः प्रस्तावितखरतरं मुक्तियुद्धं तदानीम् ।
हन्तुं पाकाधिपतिहतकैर्वङ्गदेशेऽतिघोरं
हिंसाहत्याहननविकटक्रूरचक्रं ह्यचालि ॥ १३ ॥

तेषामत्याचरणचकितासंख्यवङ्गीयलोकाः
वासोच्छिन्ना भरतविषयं स्वाश्रयार्थं प्रपन्नाः ।
फ्रेञ्चामेरीकाप्रहरणमदोन्मत्तपाकैरकस्मा-
दाक्रान्ताऽभूत् प्रियभरतभूस्त्रस्तवङ्गोपकर्त्री ॥ १४ ॥

बाङ्गलानिर्वासितजनमहापूरपूर्णे स्वदेशे
पाकाक्रान्ते भरतविषयोपान्तदेशे समायम् ।
रौद्रे यण्टर्प्रयिजसदृशे घातसज्जे च पोते
प्रत्याक्रान्तं प्रबलमनया रूससन्धिं विधाय ॥ १५ ॥

तस्मिन् घोरे भुवनविदिते धर्मयुद्धेऽद्वितीये
भैक्ष्यप्राप्तप्रतिभयमहाहेतिसज्जाऽप्यजस्रा ।
पाकिस्तानप्रचुरपृतना केवले पक्षमात्रे
मोघीभूता शरणमथ सम्प्राप सेनाधिपान्नः ॥ १६ ॥

आरूढाऽसौ धवलयशसस्तुङ्गशृङ्गं विशालं
पाकोत्सादाद् भुवनपरिधौ वङ्गदेशोद्भवाच्च ।
"चण्डी दुर्गा" इति च विविधं स्तूयमाना सुधन्या
केन्द्रीभूता सकलजनतानेत्रकौतूहलानाम् ॥ १७ ॥

बाङ्ग्लामुक्तिप्रखरसमरे विश्वदेशेष्वपूर्वं
तन्नैपुण्यं नृपनयपटुत्वं च लोकेऽद्वितीयम् ।
आविर्भूतं सकलभुवने सा च वित्ता बभूव
बाङ्ग्लामुक्तिर्भवति सुतरामिन्दिराकीर्तिमानम् ।। १८ ।।

स्वार्थापूर्त्यै भुवि बहुतरा सङ्गराः सम्बभूवु-
र्दास्याबद्धव्यथितजनमुक्त्यै तु नूनं दुरापः ।
लङ्कामुक्त्यै रघुवरकृतं सङ्गरं पूर्वकाले
बाङ्ग्लामुक्त्यै पुनरिह चकारेन्दिरागान्धिवर्या ।। १९ ।।

इत्थं देशे प्रचुरयशसस्तुङ्गशृङ्गाधिरूढाऽ
प्युच्चन्यायालयकृतमहानिर्णयात्स्वप्रतीपात् ।
क्रुद्धा साऽऽपत्सयमचिरात्स्थापयामास देशे
तेनोद्भूता सकलविषये रोषवीचिः प्रचण्डा ।। २० ।।

रुष्टैर्लोकैर्वरणसमरे पक्षसाकं निरस्ता
स्थानापन्नं सदपि जनताशासनं दीर्घसूत्रम् ।
अन्तर्भिन्नं कलहजटिलं निष्क्रियं त्यक्तमन्ते
मुख्यामात्या पुनरपि च सा सार्धवर्षद्वयेऽभूत् ।। २१ ।।

आपत्कालं ह्यनघविषये नूनमारोप्य घोरं
सत्तोत्क्षिप्ता भुवनमखिलं विस्मितं कुर्वती सा ।
स्वल्पे काले तदनु जनतापक्षभेदात्पुनश्च
सत्तारूढा ह्यधिकमकरोद्विश्वमाश्चर्यमग्नम् ।। २२ ।।

जाता माया कुहकमभवन्निवन्द्रजालं नु मोहो
झंझावातः प्रलयपिशुनः किन्नु वात्येन्दिराख्या ।
आप्लावो नु प्रतिदिशमसौ प्राचलन् न्विन्दिरोर्मि-
र्यस्मात्तुङ्गाः प्रतिदलवटा भूमिसात्संबभूवुः ।। २३ ।।

नासौ झञ्झा प्रलयपिशुना किन्तु भूकम्प एव
यस्मात्पक्षप्रमुखचरणाधस्तनी भूश्चचाल ।
तेषां स्थानं चलनवलनं सर्वमासीद्विपन्नं
दिङ्मूढाः सम्भ्रमितमतयो नैव कार्यं विजज्ञुः ॥ २४ ॥

चित्रं ! चित्रं ! निखिलविषये नूनमासेतुशैलं
तस्या निर्वाचनरणमखस्याश्वमेधीयसप्तिः ।
सर्वत्रैवाप्रतिहतगतिर्मुक्तगत्या दधाव
स्वल्पे काले ह्यतुलविपुलं दिग्जयं सा चकार ॥ २५ ॥

सत्ताप्राप्तेः प्रतिदलमहानायकस्वप्नसृष्टिः
सङ्कल्पोहा अपि च जनतानायकानां समस्ताः ।
स्वान्ते ध्वस्ता मृगजलसमं दृष्टनष्टा बभूवु-
र्लोकक्षोभाद्विमुखमनसामेष नूनं विपाकः ॥ २६ ॥

तस्या नाम्ना विजयमलभन्तार्थिनोऽप्यप्रसिद्धाः
प्राप्तः ख्यातैरपि परिभवः प्रार्थिवर्यैः प्रतीपैः ।
तस्या एष प्रचुरविजयो नूनमस्त्यद्वितीय-
श्चित्रं किं भो भरतविषये नाममाहात्म्यमेवम् ॥ २७ ॥

चित्रं चात्यद्भुतमिदमभूत्सार्धवर्षद्वये यत्
प्रत्यर्थित्वं गतनयविदो लब्धवर्णा विधिज्ञाः ।
पक्षश्रेष्ठाः प्रथितयशसः सांसदाः कीर्तिमन्तः
सर्वे प्राप्ताः परिभवपदं नाममात्रेण तस्याः ॥ २८ ॥

आपत्स्थित्यै कटुककटुकं निन्द्यमानाऽपि सर्वैः
सत्ताभ्रष्टा वरणसमरे त्यक्तपूर्वा च लोकैः ।
सन्त्रस्ताऽपि प्रकरणशतैः कण्टकाकीर्णमार्गा
सत्तारूढा जनमतसमं नूनमस्त्यद्वितीयम् ॥ २९ ॥

सर्वास्वेवं विकटविपरीतासु नूनं दशासु
नैकायोगाधिकरणसमाक्षिप्तवत्याश्च तस्याः ।
त्रिंशन्मासावधिकसमये लोकतन्त्रानुसारं
सत्ताप्राप्तिः सकलभुवने नूनमस्त्यद्वितीयम् ॥ ३० ॥

भव्योदात्ताऽप्रतिमरुचिरा सिद्धिरेषेन्दिरायाः
अत्यन्ताकर्षकगतिपरव्यक्तिमत्त्वप्रभावः ।
तस्यामस्या दलसहकृतिः प्रार्थियोगोऽप्यगण्यो
निःसन्देहं समभवदसाविन्दिरायाः स्वकीया ॥ ३१ ॥

चैतन्यानां प्रतिकृतिरियं शौर्यधैर्यादिमूर्ति-
र्दुर्दम्याशाऽप्रतिमविपुलोत्साहशक्तिप्रतीकम् ।
निर्भीका निश्चलदृढतरा घोरकृच्छ्रेष्वभीता
चामुण्डीयं समरविकटा कस्य नूनं न वन्द्या ॥ ३२ ॥

दुर्धर्षा दुर्दमनविकटा दुर्धरा दुर्निवारा
घोराद्घोरे कठिनसमये निश्चला निर्विकल्पा ।
अत्युत्कृष्टा विषमगहने दीप्तभास्वत्प्रभावा
दुर्विज्ञेया नृपनयविदां कस्य नूनं न वन्द्या ॥ ३३ ॥

धृत्युत्साहप्रबलतटिनी शक्तिसामर्थ्यमेरु-
र्निर्भीकत्वाप्रतिमहिमवान् राशिरोजस्वितायाः ।
साक्षाच्छौर्यं प्रकटविकटं, धैर्यधामादिपुञ्जो
धारायन्त्रं ह्यविरतगतेर्गान्धिवर्या बभूव ॥ ३४ ॥

स्वप्रावीण्यादतुलमहनीयाच्च दाक्ष्यादपूर्वाद्
धैर्योत्साहादपिच भुवने साहसादद्वितीयात् ।
निर्भीकत्वान्नृपनयपटुत्वाच्च शौर्यादमोघा-
दस्मद्देशः पुनरपि तया प्रापितः कीर्तिशृङ्गम् ॥ ३५ ॥

आत्मायत्तं भरतविषयं सर्वसामर्थ्ययुक्तं
कर्तुं देशे विपुलविपुला यन्त्रनिर्माणशालाः ।
भीमोद्योगा विविधविषयाः शिल्पशाला विशाला
नानाविद्युत्प्रजननपरा योजनाश्चालिताश्च ॥ ३६ ॥



खाद्यापूर्तौ परवशगतं दीर्घकालात्स्वदेशं
कृत्वा भूमिं सुजलसुफलां नैकयोगप्रयोगैः ।
धान्योत्पादे भरतविषयः कल्पितश्चात्मवश्यः
स्वाधीनत्वं ह्यशनविषये स्वाभिमानाद्यलक्ष्म ॥ ३७ ॥

पाकिस्तानात्सहजरिपुतो देशमधृष्यमेव
चीनस्वाभाविकरिपुभयाद् वीतचिन्तं विधित्सुः ।
देशे चक्रे प्रतिभयमहाहेतिनिर्माणशाला
भूम्यन्तश्च प्रबलमणुविस्फोटमप्यन्वतिष्ठत् ॥ ३८ ॥

विश्वं त्रातुं प्रलयपिशुनाद् भीषणाण्वस्त्रयुद्धा-
न्निर्व्यूहान्दोलनमिह पुरा चालितं नैजपित्रा
कर्तुं नूनं पुनरपि तया सक्रियं सप्रभावं
दिल्ल्यामेका प्रवरपरिषत्तस्य संयोजिताऽऽसीत् ॥ ३९ ॥

सा निःशस्त्रीकरणविषये सर्वराष्ट्रैः समेत्य
स्वीचक्रे निश्चयमतितरां मौलिकं तत्र शान्त्यै ।
अण्वस्त्राणां विरचनपरीक्षादिसर्वं निषेद्धुं
शान्त्यर्थं च प्रबलविषयाः प्रार्थिताः सानुरोधम् ॥ ४० ॥

रूसाम्रीकाप्रवरविषयाध्यक्षवर्यान् मिलित्वा
विश्वव्यापिप्रबलविमतिं विश्वयुद्धप्रतीपम् ।
विश्वाक्रोशं जनमतरयं ज्ञापयित्वा च तेभ्यो
नूनं चक्रे भुवनगगनं युद्धमेघैर्विमुक्तम् ॥ ४१ ॥

शस्त्रस्पर्धा झटिति विरमेद् राष्ट्रमध्ये चलन्ती
घोरं सर्वङ्कषविलयकृद्विश्वयुद्धं च मा भूत् ।
इत्युत्कृष्टा अविरतकृता यत्नवर्यास्तदीया
दूरीकर्तुं स्मरणसरणेर्नैव शक्यं कदाचित् ।। ४२ ।।

राष्ट्रैक्यार्थं भरतविषयाखण्डतारक्षणाय
रोद्धुं शक्तीर्विघटनकरीर्जातिभाषादिजन्याः ।
तत्संघर्षः परममहनीयं च हौतात्म्यमन्ते
स्यातां कालस्मरणसरणावङ्किते स्वर्णवर्णैः ।। ४३ ।।

तस्याः पुण्यस्मरणमधुना देशमासेतुशैलं
भाषाजात्यादिकसमलघुक्षुद्रभेदानपास्य ।
ऐक्याबद्धं भुवनमहितं साम्यसौभ्रात्रयुक्तं
बद्धामुक्त्यै कृतदृढमतिं शक्तिमन्तं करोतु ।। ४४ ।।

१९-११-८७

●

रेणापुरकरोपाह्वहरिश्चन्द्रेण निर्मितः ।
काव्योन्मेषाभिधानोऽयं ग्रन्थोऽत्र पूर्णतामगात् ।।



# शुद्धिपत्रम्




| पृष्टे | श्लोके | पादे | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १ | ४ | ४ | रुपकृतये | रूपकृतये |
| ४ | कविताशीर्षकम् | | ० तत्त्वम | तत्त्वम् |
| ५ | ६ | २ | ० नाञ्जडात् | नाज्जडात् |
| ५ | ९ | १ | ० अधिरुढम् | अधिरूढम् |
| ९ | ८ | १ | कर्मारव्य | कर्माख्य |
| ९ | ८ | ४ | जन्ममृत्यो | जन्ममृत्य्वो |
| ११ | ७ | १ | बिरूढम् | विरूढम् |
| १५ | १३ | ३ | यावद्वयो | यावद्द्वयो |
| २६ | १५ | १ | इस्त्रायल | इस्रायल |
| ३४ | ८ | २ | जीवनमृत्यो | जीवनमृत्य्वो |
| ४२ | १४ | २ | राशिराशि | मङ्गलाशीः |
| ४२ | १४ | ४ | विलालम् | विशालम् |
| ४३ | ३ | १ | वरिष्ठारं | वरिष्ठार्यं |
| ४५ | ४ | ४ | कालिदास | कालिदासः |
| ४६ | ६ | ४ | षर्णा | वर्णा |
| ४६ | ९ | ३ | प्रयुङ्क्के | प्रयुङ्क्ते |
| ४७ | १२ | ४ | रूचिरं | रुचिरं |
| ४९ | १० | २ | बह्वोः | दीर्घात् |
| ५० | १२ | २ | प्रवर्त्या | प्रवर्त्यं |
| ५० | १२ | ३ | जगत | जगतः |
| ५२ | ७ | २ | क्लेशाः | कष्टाः |
| ५२ | ८ | ४ | त्राणं | रक्षि |
| ५३ | १५ | ३ | प्रायं | कल्पं |

| | | | | |
|---|---|---|---|---|
| ५३ | १६ | १ | वेश्मद्वारं | पर्णशालां |
| ६३ | १७ | ४ | गातय | गायत |
| ७५ | १ | ४ | हर्मेषु | हर्म्येषु |
| ६५ | १ | १ | समर्णा | समर्पणा |
| ६५ | १ | २. | वीरपमै | वीरपरमै |
| ६८ | ९ | २ | रङ्कश | रङ्कुश |
| ६८ | १० | ४ | छिन्ना | भिन्ना |
| ७१ | २४ | ३ | आक्रामकौ | आक्रमकौ |
| ७१ | २२ | ३ | अस्च्छूर | अस्मच्छूर |
| ८८ | २५ | ३ | आरूह्य | आरुह्य |
| ९२ | ८ | ३ | क्रीता | भीमा |
| ९३ | १२ | ४ | छिन्ना | भिन्ना |
| ९६ | १० | ३ | स्विद | स्विद् |
| १०८ | ३२ | ३ | पृष्टं | पृष्ठं |
| १११ | १७ | २ | ०नयादररणे | नयानादररणे |
| ११२ | ९ | १ | बहिस्कारात् | बहिष्कारात् |
| १२४ | ९ | ४ | बभुव | बभूव |
| १२५ | १५ | १ | पूर्वं | पूर्वं |
| १२६ | १८ | ४ | धर्मारख्येयं | धर्माख्येयं |
| १३३ | २३ | ४ | निसंज्ञो | निःसंज्ञो |
| १३५ | ३३ | ३ | ० नद्धा | ० न्नद्धा |
| १६४ | १८ | १ | गुरूदत्त | गुरुदत्त |
| १७० | ५९ | १ | गान्धीजीनां | गान्धिजीनां |
| १७५ | ८९ | २ | सम्मुज्ज्वल | समुज्ज्वल |
| १७६ | १–५ | ४ | जवाहरलाल: | जवाहारलाल: |



नाम :–

**हरिश्चन्द्र रेणापुरकरः**

एम्. ए.

जन्मतिथि :– १७ सप्टेम्बर १९२४

जन्मस्थानम् :– महाराष्ट्र प्रदेशे मराठवाडाविभागे लातूर-मण्डलान्तर्गतो रेणापुरग्रामः।

शिक्षा :– रेणापुर - लातूर - औरङ्गाबाद - हैद्राबादनगरेषु।

वृत्ति :– आन्ध्रकर्णाटकप्रदेशीयवरङ्गल - गुलबर्गा - शिमोगा - चिकमगलूरादिशासकीयमहाविद्यालयेषु संस्कृताचार्यो विभागाध्यक्षश्च। महाविद्यालयप्राचार्यपदात् १९८० तमे वर्षे निवृत्तः। साम्प्रतं गुलबर्गानगरे निवसति। साहित्यधर्मदर्शनवेदेष्वभिरुचिः।

रचना :– आसन्नशसङ्ख्याकानि लघुदीर्घाणि काव्यानि लिखितानि विविधसंस्कृतपत्रपत्रिकासु च प्रकाशितानि। एकं महाकाव्यमपि प्रकाशोन्मुखं वर्तते। आकाशवाणी दूरदर्शनयोरपि नैककविसम्मेलनेषु सहभागित्वं निर्व्यूढम्। आङ्ग्ल हिन्दी-उर्दू-मराठी भाषाभिज्ञः।